# विवेक्कचूडामणि भाष्याम्

https://sa.wikisource.org/s/blp
श्री ॥ सच्चिदानन्द-शिवाभिनव-नृसिंह-भारती-स्वामि-चरणारविन्दाभ्यांनमः॥

॥श्रीविवेकचूडामणिःसव्याख्यः॥

(दक्षिणामूर्तिद्य्यानम्)
संसारसागरनिमग्नजनोद्दिधीर्षुः
योवातरच्छिवनृसिंहगुरुच्छलेन ।
जाड्यान्धकारहरणं करुणासमुद्रं
तं दक्षिणास्यमनिशं हृदिभावयामि ॥

(शारदाप्रार्थनम्)
ज्ञानस्वरूपे वाग्देवि भग्वत्पादपूजिते ।
चूडामणिंविवेकादिं व्याकुरुष्व मुखान्मम ॥
प्रसन्नानां गभीराणां वचसां देशिकेशितुः ।
भावस्त्वत्कृपया चित्ते भासतां मम शारदे ॥

(गणेशप्रार्थनम्)
रत्नगर्भ-गणेशान विघ्नध्वान्त-विभाकर ।
निर्विघ्नं पूरयस्वेमां व्याख्यां कारुण्य-शेवधे ॥

(चन्द्रमौळीश्वरप्रार्थनम्)
चन्द्रमौळीश्वर विभो ब्रह्मविद्यासमाश्रित ।
स्वानुभूतिं प्रयच्छाशु चिन्मुद्राविलस्तकर ॥

(प्रकरणार्थसङ्ग्रहः)

सर्ववेदान्तसिद्धान्तगोचरम्तमगोचरम्।
गोविनदंपरमानन्दंसद्गुरुंप्रणतोस्म्यहम्॥१॥

अन्वयः
अहं सर्ववेदान्तसिद्धान्तगोचरम् अगोचरं परमानन्दं सद्गुरुं तं गोविन्दं प्रणतः अस्मि ||१

जन्तूनांनरजन्मदुर्लभमतःपुंस्त्वंततोविप्रता
तस्माद्वैदिकधर्ममार्गपरताविद्वत्वमस्मात् परम्।
आत्मानात्मविवेचनंस्वनुभवोब्रह्मात्मनासंस्थितिः
मुक्तिर्नोशतकोटिजन्मसुकृतैःपुण्यैर्विनालभ्यते॥२॥
अन्वयः
जन्तूनां नरजन्म अतः पुंस्त्वं ततः विप्रता तस्मात् वैदिकधर्ममार्गपरता दुर्लभं अस्मात् परम् विद्वत्वं आत्मानात्मविवेचनं स्वनुभवः ब्रह्मात्मना संस्थितिः मुक्तिः शतकोटिजन्मसुकृतैः पुण्यैः विना नो लभ्यते ||२||
शृङ्गगिरिजगद्गुरु श्रीचन्द्रशेखरभारतीस्वामिभिःअनुगृहीतं संस्कृतव्याख्यानम् |
भग्वद्गीतासु–
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः॥ (२.११)

इतिश्लोकवद्विवेकचूडामणिप्रकरणप्रतिपाद्यकृत्स्नार्थसङ्ग्राहकोऽयं श्लोकः जन्तूनामित्यादिः ॥ आस्तिकस्यैव शास्त्रेऽधिकारात् प्रथमं

नरजन्मप्राशस्त्यकथनमुखेन शरीरव्यतिरिक्तात्मस्तित्वं तावद् ध्वनयति - जन्तूनां नरजन्म दुर्लभमिति ।
उक्तं च शारीरकभाष्ये - 'शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारीनाविदित्वा आत्मनः परलोकसम्बन्धमधिक्रियते' (१.१) इति।
जन्तूनां जननशीलानां प्राणिनां नरजन्म मानुष्यकं दुर्लभमिति । तत्र एकेनैव बहुषु जन्मसु प्राप्तव्येषु किल नरजन्म दुर्लभमिति वक्तुंशक्यं , शरीरसम्बन्धस्यैव जन्मशब्दार्थत्वात् । यदा चैकस्य अनेकशरीरयोगः तदा शरीरव्यतिरिक्तत्वमात्मानःसूचितमेव। प्रसिद्धं खल्वनेकैः कुसुमैः युज्यमानं सूत्रं तेभ्योऽतिरिच्यत इति,अनेकानि वासांसि क्रमेण युगपद्वा परिदधच्छरीरं तेभ्यो भिद्यत इति च। तथाच सुखहेतुशरीरप्राप्तये दुःखहेतुशरीरनिवृत्तये च पुण्येप्रवृत्तिःपापान्निवृत्तिश्च युज्यत इति,विधिनिषेधात्मककर्मशास्त्रे आस्तिकस्यैवाधिकारः। एवं ज्ञानेन सकलकर्मनिर्हरणार्थं मोक्षशास्त्रेपि।
यदि शरीरमेवात्मा स्यात् तस्य प्रत्यक्षसिद्धत्वात्, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"(बृ.उ.२.४.५) इत्यादिदर्शनसाधनविधानं कथमुपपद्येत ।
"शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं तनुम्।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः"।। (नै.सि.१.४१)

इति चैकस्यैव शुभाशुभमिश्रकर्मभिः विजातीयशरीरलाभं दर्शयति। कथमन्यथा लोकप्रसिद्धं सुखदुःखादिवैचित्र्यमुपपद्यते।यदिकर्मनिरपेक्षःईश्वर एव कांश्चित् प्राणिनःसुखिनःकांश्चिदन्यादृशांश्च सृजेत् वैषम्य्नैर्धृण्ये भजेत । तथाचेश्वरत्वं हीयते।
तदुक्तं - "वैषम्य-नैधृण्ये न सापेक्षत्वात् तथाहि दर्शयति", "न कर्माविभागादिति चेन्नानादित्वात्", "उपपद्यते चाप्युपलभ्यते च".(ब्र.सू. २.१.३४-३६) इतिसूत्रैः ईश्वरस्य कर्मसापेक्षत्वं संसारस्यानादित्वं च। धर्मभूतः संसार एव अनादिश्चेत् तदाश्रयस्य संसारिणोऽनादित्वंकैमुतिकन्यायसिद्धम् । तत्सिद्धमात्मनः शरीरव्यतिरिक्तत्वं, शरीरातिरिक्तात्मास्तित्ववाद्येवास्तिक इति। शास्त्रव्यवहारनिदानमास्तिक्यमिति जन्तूनां नरजन्म दुर्लभम् इत्यनेन सूचितम् ।
ततः पुंस्त्वं, स्त्रिया वेदेऽधिकाराभावात् उपनिषदेक-समधिगम्यआत्मा नैव ज्ञातुं शक्यत इत्यभिप्रायः। तत्रापि त्रैवर्णिकानां वेदाधिकारसत्वेऽपि क्षत्रियवैश्ययोः राज्यपरिपालनकृष्यादिरूपाणां चित्तविक्षेपहेतुभूतानां बाह्यव्यापाराणां सत्वादैदम्पर्येण आत्मविचारः दुर्घट इति–
मुखजानामयंधर्मो वैष्णवं लिंगधारणम् ।
बाहुजातोरुजातानां नायं धर्मो विधीयते ॥
इति स्मृत्यनुसारेणैदम्पर्येण ब्रह्मविचारसाधनसंन्यासस्यावकाशाद् एकस्मिन्नेव जन्मनि ब्रह्माधिगमः तयोर्दुर्लभ इति द्योतनार्थं द्विजत्वं ततः इत्यनुक्त्वा ततो विप्रतेत्युक्तम् ।
ब्राह्मणस्य तु देहोऽयं नोपभोगाय कल्पते ।
इह क्लेशाय महते प्रेत्यानन्तसुखायच ॥

इति वसिष्ठस्मृत्या वेदविहितप्रवृत्तिनिवृत्तिधर्मानुष्ठानेन एकस्मिन्नेव जन्मनि ब्रह्माधिगन्तं शक्यं ब्राह्मणेनेति भावः। अत एव तस्माद् वैदिकधर्ममार्गपरतेत्युक्तम् ।न केवलं विप्रतया लब्धव्यं लभ्यते,अपितु तां लब्ध्वा तदुचितधर्मानुष्ठानेनेति भावः।"धर्मो विश्वस्य जगतः प्रतिष्ठा....धर्मेण पापमपनुदति " (म.ना.उ.१७.६) इति श्रुत्या धर्मस्यैव सुखसाधनत्वं दुःखहेतुपापनिवर्तकत्वं,तन्निवृत्या दुःखाभावहेतुत्वंचेति,सुखं मे भूयात् दुःखं मे माभूदिति सकलजनकामनाविषयसुखदुःखाभावरूपपुरुषार्थसाधनत्वं तस्यैवेति द्योतयितुं धरतीति धर्मः ध्रियतेऽनेनेति वा धर्मः इति व्युत्पत्त्याजगत्प्रतिष्ठाहेतुत्वं तस्य श्रुतिबोधितं सूचयितुं वैदिककर्ममार्गपरतेत्यनुक्त्वा धर्ममार्गेत्युक्तम् । वैदिककर्मणः धर्मत्वेपि कर्मशब्देन विवक्षितार्थालाभात् ।यदि धर्मव्यतिरिक्तं किंचित्सुखसाधनं दुःखनिवृत्तिसाधनं च स्यात् तत्साधनसंपादनेन सर्वो लोकः सर्वदाऽपि सुखी ,निवृत्तदुःखश्च स्यादेव । धर्मस्य तु अतीन्द्रियत्वेन शास्त्रैकसमधिगम्यत्वात् जनानां तज्ज्ञानस्य शास्त्रमन्तराऽसंभवात्साधनालाभात् फलालाभ इति प्रतिपादयितुं शक्यते । तदुक्तं वैदिकेति ।
धर्मस्य लक्षणं, "चोदनालक्षणोर्थो धर्मः "(पू.मी.१.१.२) इति जैमिनिमहर्षिभिः सूत्रितं यत् वेदप्रमाणकत्वं तद्वैदिकेति विशेषणेन अवगमितम् । नहि वेदं विना प्रमाणान्तरं धर्मविषये पदमाधातुम् ईष्टे, तस्यातीन्द्रियत्वेन प्रत्यक्षस्य तत्राप्रसरात् । अत एवनानुमानंतत्रप्रसरति,प्रत्यक्षमूलकत्वादनुमानप्रवृत्तेः ।। अत एव वेदव्यतिरिक्तशब्दोऽपि न तं बोधयितुं शक्यत्वात् । स्मृतीनामपि पौरुषेयत्वेन पुरुषाणां भ्रमप्रमादादिसम्भवेन कर्तृदोषनिबन्धनाप्रामाण्यशङ्कायामपौरुषेयतया दोषगन्धानागन्धितश्रुतिमूलकतयैव प्रामाण्यस्य वक्तव्यतया वेदव्यतिरिक्तस्य शब्दस्य धर्मे स्वतोऽप्रमाणत्वात् ।
किञ्च स्मृतिकर्तारो वा अतीन्द्रियं धर्मं कथं व्यजानन् ? योगजसामर्थ्येनेति चेत्, तत्सामर्थ्यं कथं तैः सम्पादितम् ? धर्मानुष्ठानेनेति चेत्, स धर्मः कथं ज्ञातः ? अत एव–
यो ब्रह्माणं विदधाति पूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै।(श्वे.उ.६.१८)
इति प्रथमं सृज्यमानस्य हिरण्यगर्भस्यापिईश्वरानुगृहीतवेदमूलकमेव धर्मज्ञानमिति बोधयति श्रुतिः । किंवक्तव्यमितरेषाम्?अतः सुष्ठूक्तंवैदिकेति ।
अब्भक्षा वायुबक्षा इतिवद्वेदैकमेयत्वं धर्मस्य बोधयति । अत्र धर्मशब्देन प्रवृत्तिधर्मः निवृत्तिधर्मश्च कथ्येते। उक्तं हि गीताभाष्ये- "द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च " (१.१) इति।

धर्म एव परमं साधनं नित्यसुखावाप्तौ नान्यदपेक्ष्यमस्तीति कर्ममीमांसकाः। तान्कटाक्षयति मार्गेति। तेन परमपुरुषार्थ साधनीभूतब्रह्मसाक्षात्कारसाधनवेदान्तविचारहेतुत्वेनसंन्यासरूपनिवृत्तिधर्मस्य तत्साधनवैराग्यहेतुभूतचित्तशुद्धिहेतुत्वेन निष्कामकर्मानुष्ठानरूपप्रवृत्तिधर्मस्य चापेक्षितत्वं, न तु साक्षान्निरतिशयसुखसाधनत्वं तदुभयस्येति सूचितम्। तदुक्तं भगवता बादरायणेन (मो.ध.२४०.६) –

द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मः निवृत्तिश्च प्रकीर्तितः।। इति।

तथाच ब्राह्मणेन उपनयनानन्तरम्-

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिःकाम्ये मतिस्त्यज्यताम्।
पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयताम् ।।
आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम्॥
सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढाऽऽधीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु सन्त्यज्यताम् ॥

इति सोपानपञ्चकोपदिष्टरीत्या ईश्वरार्पणबुध्या कर्म कुर्वाणेन चित्तं शोधयित्वा विषयेभ्यो विरज्य कर्मभ्यस्समुपरमितव्यमित्येतद् बोधितम् । तदुक्तं मोक्षधर्मेषु–

नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यताच ।
शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरतिः क्रियाभ्यः॥ इति

विद्वत्वमस्पात्परम् ।

तत्र प्रवृतिधर्मविषये एवं योजना -यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति (छां.उ.१.१.१०) इति च्छान्दोग्यश्रुत्या क्रियमाणं कर्म तदङ्गभूतमन्त्रार्थज्ञानपुरस्सरं क्रियते चेद्भूयसे फलायेति बोधितं भवति । तदुक्तं तत्रैव भाष्ये दृष्टं हि लोके वणिक्छबरयोः पद्मरागमणिविक्रये वणिजो विज्ञानाधिक्यात्फलाधिक्यम्इति । निवृत्तिधर्मविषये “संन्यस्य श्रवणं कुर्यात्” इति विधानात्संन्यासोत्तरकालिकवेदान्तवाक्यश्रवणजन्यपरोक्षज्ञानवत्वं विद्वत्वम् ।अस्मात्परमात्मानात्मविवेचनं ।इदं ग्रन्थ एव उत्तरत्र स्पष्टयिष्यते । तेन मननं युक्तिभिः श्रुतार्थदृढीकरणार्थमनुचिन्तनरूपं संशयभावनानिरासकमुक्तं भवति ।

ततः स्वनुभवः,निदिध्यासनपूर्वकब्रह्मसाक्षात्कारःकथितो भवति । अत एव स्वनुभव इत्युक्तम्, विपरीतभावना-निवर्तकनिदिध्यासानभावे श्रवणमननाभ्यां जायमानानुभवः सौष्ठवं नाश्नुत इति । एतेन शुभेच्छा विचारणा तनुमानसा सत्त्वापत्तिश्चेति ज्ञानभूमिकाचतुष्टयं कथितमासीत् ।

असंसक्तिः पदार्थाभावना तुर्यगाच “ब्रह्मात्मना संस्थितिः मुक्तिः “ इत्यत्रसंस्थितिशब्देन वासनाक्षय-मनोनाश-सहकृतस्वनुभवबोधकेन व्यञ्जिताः । तेन सालोक्य-सामीप्य-सारूप्य-सायुज्यानां मुख्यमुक्तित्वाभावश्च सूचितो भवति । सगुणविषयकतया तेषां चतुर्णामपि मिथ्यात्वात् , परिच्छेदत्रयशून्यत्वरूपब्रह्मत्वस्य सगुणेऽसम्भवात् । ब्रह्मात्मना संस्थितिः कल्पितसकलविधोपाधिसम्बन्धविधुरनित्यशुद्धबुद्धमुक्तप्रत्यगभिन्नपरिपूर्णस्वरूपेणावस्थानं कैवल्यमेव मुक्तिः, शतकोटिजन्मसु कृतैः पुण्यैर्विना नो लभ्यते इत्यन्वयः॥२॥

दुर्लभं त्रयमेवैतद् देवानुग्रहहेतुकम् ।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥३॥

अन्वयः

मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः(इति) एतत् दैवानुग्रहहेतुकम् त्रयम् दुर्लभमेव (अस्ति)||३||

लब्ध्वा कथंचित् नरजन्म दुर्लभम्
तत्रापि पुंस्त्वं श्रुतिपार-दर्शनम्।
यस्स्वात्ममुक्तयै न यतेत मूढधीः
स आत्महा स्वं विनिहन्त्यसद्ग्रहात् ॥४॥

अन्वयः

कथंचित् दुर्लभं नरजन्म लब्ध्वा तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् यः मूढधीः न यतेत स्वात्ममुक्त्यै स स्वं आत्महा विनिहन्त्यसद्ग्रहात्||४||

इतः कोन्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ।
दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥५॥

अन्वयः

इतः कोन्वस्ति मूढात्मा यः दर्लभं मानुषं देह प्राप्य तत्रापि पौरुषम् तु स्वार्थे प्रमाद्यति ||५||

पठन्तु शास्त्राणि यजन्तु देवान्
कुर्वन्तु कर्माणि भजन्तु देवताः ।
आत्मैक्यबोधेन विना विमुक्तिः
न सिध्यति ब्रह्मशतान्तरेऽपि ॥६॥
अन्वयः
पठन्तु शास्त्राणि यजन्तु देवान् कुर्वन्तु कर्माणि भजन्तु देवताः विना आत्मैक्यबोधेन विमुक्तिः ब्रह्मशतान्तरेपि न सिध्यति ||६||

अमृतत्वस्य नाशास्ति वित्तेनेत्येव हि श्रुतिः ।
ब्रवीति कर्मणो मुक्तेःअहेतुत्वं स्फुटं यतः ॥७॥
अन्वयः
मुक्तेः अहेतुत्वं कर्मणो स्फुटं यतः श्रुतिः ब्रवीति हि न आशास्ति अमृतत्वस्य वित्तेनेत्येव ||७||

भाष्यम्

यतो बहुजन्मार्जितसुकृतविशेषप्राप्यं मानुषपौरुषादिकम्,यतश्च स्वार्थेऽप्रमत्तेन पुरुषेण भवितव्यम्, यतश्चात्यन्तिकदुःखनिवृत्ति-निरतिशयसुखरूपमोक्षः आत्मैक्यबोधेन विना कर्मकाण्डाध्ययनतदनुष्ठानादिरूप-कर्मकलापेन साक्षान्नाविर्भवति,यतश्च श्रुतिरेव साक्षादिममर्थं,"अमृतत्वस्य नाशास्ति वित्तेन "(बृ.उ.२.४.२)इति वित्तसाध्यकर्मणः साक्षान्मोक्षोपयोगित्वं प्रत्यक्षेप्सीत् अतः विमुक्त्यै प्रयतेत विद्वानिति -

अतो विमुक्त्यै प्रयतेत विद्वान्
संन्यस्तबाह्यार्थ-सुखस्पृहः सन् ।
सन्तं महान्तं समुपेत्य देशिकं
तेनोपदिष्टार्थसमाहितात्मा ॥८॥
अन्वयः
अतः विद्वान् प्रयतेत विमुक्त्यै संन्यस्तबाह्यार्थसुखस्पृरः सन् समुपेत्य सन्तं महान्तं देशिकं तेनोपदिष्टार्थसमीहितात्मा ||८||

भाष्यम् –
विद्वानिति नित्या नित्यविवेकी कथितः।
ये हिसंस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः॥ (गी. ५.२२)
इति गीतासु बुधशब्देनार्थस्यास्य सूचितत्वात् । वैषयिकसुखस्य अनित्यत्वं द्योतयति बाह्यार्थेति । अर्थानां बाह्यत्वेनगन्तुकतया सार्वदिकत्वाभावात्तत्प्रयोज्यसुखाविर्भावस्यापि तादृशत्वमिति । अतो विवेकिना पुरुषधौरेयेण तत्र स्पृहात्यक्तव्येति प्रयत्नप्रकारं प्रथममाह संन्यस्तबाह्यार्थसुखस्पृहः सन्निति।
बाह्याश्च ते अर्थाश्च बाह्यार्थाः।तैः सुखं बाह्यार्थसुखम् ।तस्मिन् स्पृहा, बाह्यार्थसुखस्पृहा संन्यस्ता येन इति ऐहिकामुष्मिक-फलभोगविरागः कथितः ।तेन श्रुतिस्मृत्युक्तकर्मणां निष्कामानुष्ठानेन नितान्तनिर्मलीकृतस्वान्तत्वमुक्तप्रायम् । अविवेकिनः विषयलम्पटस्य अस्तित्वमपि दुर्लभमिति सूचयिति– सन्निति।"आचार्यवान्पुरुषो वेद " (छां.उ.६.१४.२) "आचार्याद्धैव विद्या विदिता साधिसष्ठं प्रापत्" (छां. उ.४.९.३)इति श्रुतेः अतीन्द्रियस्य आत्मैक्यस्य गुरुं विनाऽधिगन्तुमशक्यत्वात् पूर्वोक्तरीत्या महापुरुषसंश्रयः कर्तव्य इत्याह– सन्तम् इत्यादिना। अस्तीति सन् तमित्यर्थः। "अस्ति ब्रह्मेति चेद्वेद , सन्तमेनं ततो विदुः"(तै.उ.२.६)"सदेव सौम्येदमग्र आसीत्"(छा.उ.६.२.१) " यो वै भूमा तदमृतम् (छां.उ.७.२४.१)"अतोऽन्यदार्तम्"(बृ.उ.३.४.२) "सत्यं ज्ञानमनन्तं ब्रह्म "(तै.उ.२.१)
नासतो विद्यते भावः नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदर्शिभिः॥ (भ.गी.२.१६)
इत्यादि श्रुतिस्मृतिभ्यः कालत्रयाबाध्यत्वरूपास्तित्वस्य ब्रह्मण्येव सत्वात् । देशिकस्य तथात्वं " ब्रह्मविद्ब्रह्मैव भवति " (मु.उ.) इति श्रुत्या तदभिन्नत्वात् । तेन असद्भ्योऽनात्मभ्यः सुतरां निवृत्ताभिमानत्वरूपा ब्रह्मनिष्ठा सूचिता भवति । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" (मु.उ.१.२.१२), "अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान्ह्यतर्क्य-मणुप्रमाणात् "(क.उ.२.८)इत्यादिश्रुतिभ्यः

तादृशादेव गुरोः संशयभावनादिविरहितशुद्धात्मबोधस्य सम्भवात् ।
युक्तं ह्येतत् –लोकेऽप्यस्माभिरदृष्टो मार्गः दृष्टतन्मार्गैः किल बोधनीयः।स्वयमेव कथञ्चिल्लब्धोऽपि संशयः दृष्टतत्त्वैः किल निरसनीयो भवति । तत्र शुकजनकसंवादः प्रमाणम् ।जन्मान्तरकृतसुकृतपरिपाकवशात् स्वयं ज्ञातज्ञेयोऽपि पित्रा*नुशिष्टोऽपि महानुभविनो जनकस्य वैदेहस्य वचनात्किल ब्रह्मणि विश्रान्तमानसोऽभूच्छुक इति हि वासिष्ठादौ स्मर्यते । तथाच सद्रूपब्रह्माभिन्नत्वात् सद्रूपत्वं देशिकस्य । अत एव महत्वम् । विवेचितकोशपञ्चकत्वात् अपरिच्छिन्नत्वम्।
यद्वा - शास्त्रोक्त समस्तसद्गुणमण्डितत्वम् ।वक्ष्यते हि–
श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्मवित्तमः ।
अहेतुकदयासिंधुः बन्धुरानमतां सताम् ॥
ब्रह्मण्युपरतश्शन्तो निरिन्धन इवानलः । (श्लो.३४-३५)
इत्यादिगुणजातम् ।

शिष्येभ्यो ज्ञानं दिशतीति देशिकः , तं समुपेत्य-यथाविधि उपसद्य तेन गुरुणा उपदिष्टोयोऽर्थः ब्रह्मरूपः तत्प्राप्तिप्रकाररूपश्च , तत्रैव सम्यगाहितः आत्मा अन्तःकरणं येन तादृशः सन् । विमुक्त्यैप्रयतेतेत्यनेनमुक्तीच्छां विना तत्र प्रयत्नासम्भवात् मुमुक्षुत्वं ध्वनितम् । उपदिष्टार्थसमाहितात्मा इत्यनेन सततं ब्रह्मसमाहितमानसत्वस्य सर्वकर्मसंन्यासं विनाऽसंभवाद्विवेकिना विरक्तेन स्वरूपतः सकलकर्मसंन्यासपुरस्सरं ब्रह्मनिष्ठं गुरुमुपसद्य सर्वदा ब्रह्मविचारः कर्तव्य इत्युक्तं भवति॥८॥

सङ्ग्रहेणोक्तमर्थं सप्तभिः श्लोकैर्विवृणोति । तत्र मुक्त्यर्थं क्रियमाणप्रयत्नस्य सम्यग्दर्शननिष्ठान्तत्वात्, मोक्षसाक्षात्साधनं सम्यग्नदर्शननिष्ठां तत्र मुख्यहेतुं परवैराग्यापरपर्यायं योगारूढत्वं चाह अनेन श्लोकेन–

उद्धरेदात्मनात्मानं मग्नं संसारवारिधौ ।
योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया ॥९॥

अन्वयः
योगारूढत्वमासाद्य सम्यग्दर्शननिष्टया संसारवारिधौ मग्नं आत्मानम् आत्मना उद्धरेत् ||९||
भाष्यम् –
यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
सर्वसङ्कल्पसंन्यासीयोगारूढस्तदोच्यते॥(भ.गी.६.४)
इति भगवद्वचनात् ।
परवैराग्यपुरस्सरसम्यग्दर्शननिष्ठैव संसाराब्धिपतितात्मोद्धरणे हेतुःइति भावः।
क्लेशादिपञ्चकतरङ्गयुतं भ्रमाढ्यं
दारात्मजाप्तधनबन्धुझषाभियुक्तम्।
और्वानलाभनिजरोषमनङ्गजालं
संसारसागरमतीत्य हरिं व्रजामि॥
संसारसागरविशालकरालकाल-
नक्रग्रहग्रसननिग्रहविग्रहस्य।
व्यग्रस्य रागनिचयोर्मिनिपीडितस्य
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥
इत्यादिरीत्या अविद्यातद्विलासरूपस्य संसारस्य सम्यग्ज्ञानं विना दुस्तरत्वाद् वारिधित्वेन रूपणम्।नह्यनात्मानं देहमात्मत्वेन मन्वानस्य तस्मिन् जायमाने म्रियामाणे वा तद्गतधर्माःस्वस्मिन्नास्तीति विज्ञातुं शक्यं, क्षुत्पिपासायुते वा प्राणे, सुखिनि दुःखिनि वाऽन्तःकरणे। एवमविद्यास्मितारागद्वेषाभिनिवेशानां सन्ततत्वात् क्लेशादिपञ्चकस्य तरङ्गतया रूपणम् ।भ्रम एव भ्रमः अतस्मिंस्तद्बुद्धिरेव आवर्तः इत्यादि स्पष्टम्।अनाद्यविद्यावशात् अज्ञःकर्ता मनुष्योऽहम्इत्यादिरीत्या स्थूलसूक्ष्मकारणशरीरेषु अनात्मसु अहमिति स्वरूपाप्राप्त्या स्थितिरेव संसारवारिधिमग्नत्वमसङ्गसच्चिदानन्दरूपस्यात्मनः।तत्रापि सुषुप्तौ संसाराननुभवात् अविवेकिमनोरूपोपाधिमूलकत्वमेव वक्तव्यं संसारस्य। श्रूयते हि–
मन एव मनुष्याणां कारणं बंधमोक्षयोः।
बन्धाय विषयासक्तं मुक्त्यैनिर्विषयं स्मृतम्॥इति । (ब्र.बिं.२)
अतः विवेचनशून्यस्य मनसःशरीरादिसंसक्तत्वं आत्मनः संसारवारिधिमग्नत्वम्।

अतःश्रवणमननादिशास्त्रीयसंस्कारसंस्कृतं मनो यदा भवति तदा भ्रमशून्यं आत्मयाथात्म्यज्ञानावाप्त्या भवतीति,अविवेकि मनः शास्त्रजन्यविवेकवता मनसा उद्धरेत् अनात्मभ्योऽपनयेत्।तथाच तस्मिन् पराङ्मुखत्वस्वाभाव्यात् बाह्येषु शरीरादिषु सक्ते वस्तुतोऽसङ्गस्यापि

लोहितस्फटिकवत् संसक्तस्येव भासमानस्य आत्मनः उपाधेरनात्मसम्बन्धाभावे प्रत्यङ्मुखतयाऽऽत्ममात्रसंस्थत्वे च आत्मा उद्धृत इव भवतीति भावः।
संसारवारिधौमग्नमात्मानं योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया आत्मना उद्धरेदित्यन्वयः ॥९॥

योगारूढत्वं विशदयन्नेव श्रवणमनननिदिध्यासनानि संन्यासोत्तरकालिकानि सम्यग्दर्शननिष्ठावाप्तिसाधनानि तावदाह संन्यस्येत्यादिना–

संयस्य सर्वकर्माणि भवबन्धविमुक्तये ।
यत्यतां पण्डितैर्धीरैः आत्माभ्यास उपस्थितैः ॥१०॥
अन्वयः
पण्डितैः धीरैः उपस्थितैः सर्वकर्माणि संन्यस्य भवबन्धविमुक्तये आत्माभ्यास यत्यतां ||१०||
भाष्यम् –
सर्वकर्माणि संन्यस्य कर्मकाण्डोक्तानि स्वरूपतोपि परित्यज्यभवबन्धविमुक्तये सांसारिकबन्धनिवृत्तिहेतुभूतसम्यग्दर्शननिष्ठायै, पण्डितैः आत्मविषयकपरोक्षज्ञानवद्भिः,धीरैः वशीकृतबुद्धिभिः–
पराञ्चिखानि व्यतृणत् स्वयम्भूः
तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षत्
आवृत्तचक्षुरमृतत्वमिच्छन् (क.उ.४.१)
इति श्रुतेः। धियं रातीति धीरः , प्रधानभूतां कार्यकारणसंघातमध्ये बुद्धिं वशयतीत्युक्ते इतरेन्द्रियजयः अर्थसिद्धः । एतेन शान्त्याद्युपेतत्वंसूचितं भवति ।
अत एव आत्माभ्यासे (पं.द.७.१०६) –
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥
इत्यभियुक्तोक्तिरीत्या श्रुतार्थमननतत्कथनपरस्परप्रबोधनरूपज्ञानकाण्डोक्तव्यापारेषूपस्थितैर्वर्तमानैः, विजातीयप्रत्ययतिरस्कृत-सजातीयप्रत्ययप्रवाहरूपनिदिध्यासनानुष्ठानेन यत्यतामित्यन्वयः । एतादृशस्य पुंसः सर्वसङ्कल्पसंन्यासेन परवैराग्यापरपर्यायं योगारूढत्वं सिद्धमेव मन्तव्यम् ॥१०॥
ननु “यावज्जीवमग्निहोत्रं जुहुयात् “(पू.मी.६.२.७) “यावज्जिवं दर्शपूर्णमासाभ्यां यजेत “(आप.श्रौ.३.१४.११) “अहरहस्संध्यामुपासित “(ष.ब्रा.), “कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः”(ई.उ.२)इत्यादिश्रुतिभिः यावज्जीवं कर्मणः कर्तव्यत्वेन चोदितत्वात् सर्वकर्मसंन्यासे श्रुत्युल्लङ्घनं प्रसज्येतेति चेत्, तासां श्रुतीनां अशुद्धचित्तविषयत्वात् । अत एव,“एवं त्वयि नान्यथेतोस्ति न कर्म लिप्यते नरे”(ई.उ.२) इतीशावास्यमन्त्रेण नरे नरमात्राभिमानिनि त्वयि इतः कर्मकरणात् अन्यथा अन्यो मार्गः कर्मलेपाभावप्रयोजकः नास्तीत्युक्तम् ।
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः (म.ना.उ.१०.५) संन्यासयोगाद्यतयःशुद्धसत्वाः (म.ना.उ.)॥
प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यन्ति ॥ (मुं.उ.१.२.७)

“किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे”(ऐ.उ.२.३.६)इत्यादिना कर्मसंन्यासस्यापि विहितत्वान्निन्दितत्वाच्च कर्मणः ॥ “तमेतं वेदानुवचनेनब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन “ (बृ.उ.४.४.२२), “योगिनःकर्म कुर्वन्ति संङ्ग त्यक्त्वाऽऽत्मशुद्धये” (भ.गी.५.११)इत्यादिश्रुतिस्मृत्यर्थपर्यालोचनया विविदिषासाधनत्वं चित्तशुद्धिद्वारा तेषामवसीयते,न तु सार्वदिकत्वं । तथासति,“यदहरेव विरजेत् तदहरेव प्रव्रजेत् “ (जा.उ.४.४) इत्यादिसंन्यासविधायकवाक्यव्याकोपापत्तेः,कर्मनिन्दानुपपत्तेश्च ।“अत एवचाग्नीन्धनाद्यनपेक्षा “ (ब्र.सू.३.४.२५),”सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्” (ब्र.सू.३.४.२६)इति च सूत्राभ्यामयमेवार्थो भण्यते । परमपुरुषार्थभूतमोक्षार्थत्वं नास्ति कर्मणां, चित्तशुद्धिद्वारा ज्ञानबहिरङ्गत्वम् इतितदिदमाह चित्तस्येति -
सर्वकर्माणि संन्यस्य कर्मकाण्डोक्तानि स्वरूपतोपि परित्यज्यभवबन्धविमुक्तये सांसारिकबन्धनिवृत्तिहेतुभूतसम्यग्दर्शननिष्ठायै, पण्डितैः आत्मविषयकपरोक्षज्ञानवद्भिः,धीरैः वशीकृतबुद्धिभिः–
पराञ्चिखानि व्यतृणत् स्वयम्भूः
तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षत्
आवृत्तचक्षुरमृतत्वमिच्छन् (क.उ.४.१)
इति श्रुतेः। धियं रातीति धीरः , प्रधानभूतां कार्यकारणसंघातमध्ये बुद्धिं वशयतीत्युक्ते इतरेन्द्रियजयः अर्थसिद्धः । एतेन शान्त्याद्युपेतत्वंसूचितं भवति ।

अत एव आत्माभ्यासे (पं.द.७.१०६) –
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥
इत्यभियुक्तोक्तिरीत्या श्रुतार्थमननतत्कथनपरस्परप्रबोधनरूपज्ञानकाण्डोक्तव्यापारेषूपस्थितैर्वर्तमानैः, विजातीयप्रत्ययतिरस्कृत-सजातीयप्रत्ययप्रवाहरूपनिदिध्यासनानुष्ठानेन यत्यतामित्यन्वयः । एतादृशस्य पुंसः सर्वसङ्कल्पसंन्यासेन परवैराग्यापरपर्यायं योगारूढत्वं सिद्धमेव मन्तव्यम् ॥१०॥
ननु “यावज्जीवमग्निहोत्रं जुहुयात् “(पू.मी.६.२.७) “यावज्जिवं दर्शपूर्णमासाभ्यां यजेत “(आप.श्रौ.३.१४.११) “अहरहस्संध्यामुपासित “(ष.ब्रा.), “कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः”(ई.उ.२)इत्यादिश्रुतिभिः यावज्जीवं कर्मणः कर्तव्यत्वेन चोदितत्वात् सर्वकर्मसंन्यासे श्रुत्युल्लङ्घनं प्रसज्येतेति चेत्, तासां श्रुतीनां अशुद्धचित्तविषयत्वात् । अत एव,“एवं त्वयि नान्यथेतोस्ति न कर्म लिप्यते नरे”(ई.उ.२) इतीशावास्यमन्त्रेण नरे नरमात्राभिमानिनि त्वयि इतः कर्मकरणात् अन्यथा अन्यो मार्गः कर्मलेपाभावप्रयोजकः नास्तीत्युक्तम् ।
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः (म.ना.उ.१०.५) संन्यासयोगाद्यतयःशुद्धसत्वाः (म.ना.उ.)॥
प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यन्ति ॥ (मुं.उ.१.२.७)

“किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे”(ऎ.उ.२.३.६)इत्यादिना कर्मसंन्यासस्यापि विहितत्वान्निन्दितत्वाच्च कर्मणः ॥ “तमेतं वेदानुवचनेनब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन “ (बृ.उ.४.४.२२), “योगिनःकर्म कुर्वन्ति संङ्ग त्यक्त्वाऽऽत्मशुद्धये” (भ.गी.५.११)इत्यादिश्रुतिस्मृत्यर्थपर्यालोचनया विविदिषासाधनत्वं चित्तशुद्धिद्वारा तेषामवसीयते,न तु सार्वदिकत्वं । तथासति,“यदहरेव विरजेत् तदहरेव प्रव्रजेत् “ (जा.उ.४.४) इत्यादिसंन्यासविधायकवाक्यव्याकोपापत्तेः,कर्मनिन्दानुपपत्तेश्च ।“अत एवचाग्नीन्धनाद्यनपेक्षा “ (ब्र.सू.३.४.२५),”सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्” (ब्र.सू.३.४.२६)इति च सूत्राभ्यामयमेवार्थो भण्यते । परमपुरुषार्थभूतमोक्षार्थत्वं नास्ति कर्मणां, चित्तशुद्धिद्वारा ज्ञानबहिरङ्गत्वम् इतितदिदमाह चित्तस्येति -

चित्तस्य शुद्धये कर्म नतु वस्तूपलब्धये ।
वस्तुसिद्धिर्विचारेण न किंचित्कर्मकोटिभिः ॥११॥

अन्वयः

कर्म चित्तस्य शुद्धये न तु वस्तूपलब्धये वस्तुसिद्धिः विचारेण किंचित् कर्मकोटिभिः न ||११||

स्पष्टोर्थः ।

विचारस्य वस्तूपलब्धिहेतुत्वं दृष्टान्तेन विशदयति सम्यगिति –

सम्यग्विचारतः सिद्धा रज्जुतत्वावधारणा ।
भ्रान्त्योदितमहासर्पभवदुःखविनाशिनी ॥१२॥
अन्वयः

रज्जुतत्त्वावधारणा सम्यग्विचारतः सिद्धा भ्रान्त्या उदित महासर्पभयदुःखविनाशिनी॥ १२॥
भाष्यम् –

मन्दान्धकारे पतितां रज्जुं सर्पं मन्वानः पुरुषः बिभ्यत् दीपानयनेन सम्यग्विचार्य वस्तुतत्त्वं बुध्वा भयकम्पादिदुःखं जहातीति प्रसिद्धम् । तत्र रज्वां भ्रान्त्या उदितः यो महासर्पः, तद्भवं तत्प्रत्ययजन्यं यद्दुःखं, तद्विनाशिनी सम्यग्विचारजन्या रज्जुतत्त्वावधृतिः। तद्वत् भ्रान्त्या जातं यद्भवदुःखं जन्ममरणप्रयोज्यदुःखं, तद्विनाशिनी सम्यग्विचारप्रयोज्या तत्त्वावधारणा आत्मयाथात्म्यावधृतिः ब्रह्मसाक्षात्कारः इति सर्वांशे प्रकृतोपयोग्ययं दृष्टान्तः ॥१२॥

आप्तोक्त्यनुसारेण क्रियमाणविचारस्यैव अर्थनिश्चयहेतुत्वम्, नान्यस्य कर्मण इत्याह –
अर्थस्येति ।

अर्थस्य निश्चयो दृष्टो विचारेण हितोक्तितः ।
न स्नानेन न दानेन प्राणायामशतेन वा ॥१३॥
अन्वयः

हितोक्तितः विचारेण अर्थस्य निश्चयः दृष्टः (भवति) स्नानेन न (भवति) दानेन प्राणायमशतेन वा न (भवति)॥ १३॥
भाष्यम् –
अज्ञानदोषवशात् स्वयंभ्रान्तस्य पुरुषस्य आप्तोक्तिरूपावलम्बनाभावे भयकम्पाद्यनर्थमनुभवतस्स्वतो विचारे प्रवृत्तेः दुर्लभत्वात् विचारे हितोक्तिर्हेतूकृता । हितत्वं च यथार्थवक्तृत्वम । यदि भ्रान्तः पुरुषः हितोक्त्यनुसारेण विचारमविधाय स्नानं वा दानं वा प्राणायामशतं वा कर्म कुर्यात् भ्रमनिवर्तकापरोक्षप्रमाया अभावे अनर्थप्रयोजकभ्रमानिवृत्तेः कथं निवृत्तानर्थो भवेदिति भावः । विचारश्च अर्थयाथात्म्यनिश्चयानुकूलो मानसो व्यापारः । तथा च हितोक्तिसहकृतविचारस्यैवार्थप्रमाहेतुत्वं भ्रमस्थले प्रत्यक्षसिद्धम् । तथा सति प्रकृतेऽपि श्रुत्याचार्योपदेशानुसारेण आत्मविचारं कृत्वा तद्याथात्म्यमपरोक्षीकृत्य अनात्माध्यासरूपसंसारादात्मानं मोचयेद् इत्युपदेशः ॥१३॥
तत्तत्कर्मणि समर्थस्यैव तत्तत्कर्मफलभोक्तृत्वसम्भवात् असमर्थस्य तदयोगात् बाह्यदेशकालादेः सहकारित्वमात्रम् आन्तरसामर्थ्यस्यैव फलदायकत्वमित्याह - अधिकारिणमिति ।

अधिकारिणमाशास्ते फलसिद्धिर्विशेषतः ।
उपाया देशकालाद्याः सन्त्यस्यां सहकारिणः ॥१४॥

अन्वयः
आशास्ते अस्याम् देशकालाद्याः फलसिद्धिःविशेषतः अधिकारिणम् उपायाः सहकारिणः सन्ति॥ १४॥
भाष्यम् –
कर्मणां तावद्दृष्टार्थवात्, "यदाहवनीये जुहोति" (तै.ब्रा.१.१.१०), "अश्वस्य पदे जुहोति"(तै.ब्रा.३.८.९), "प्राचीनप्रवणे वैश्वदेवेन यजेत" (तै.ब्रा.१.४.१०), "सायं जुहोति" (मै.सं.१.८.७), "प्रातर्जुहोति" (तै.ब्रा.२.१.३), "वसन्ते वसन्ते ज्योतिषा यजेत" (आप.श्रौ.सू.१०.२.५), "वसन्ते ब्रह्मणोऽग्नीनादधीत" (तै.सं.२.२.३.२) इत्यादि शास्त्रानुसारेण देशकालयोरपि असाधारण-कारणत्वम् अङ्गीकर्तव्यम् ।

यद्यपि ज्ञानस्यापि,
यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके ।
यथाऽप्सु परीव ददृशे तथा गंधर्वलोके छायातपयोरिव ब्रह्मलोके ।। (क.उ.६.५)
इह चेदवेदीदथ सत्यमस्ति
न चेदिहावेदीन्महती विनष्टिः । (के.उ.२.५)

इत्यादि श्रुत्यनुसारेण मनुष्यलोकब्रह्मलोकयोरेव ज्ञानभूमित्वं प्रतीयते, एवं
ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत् ।
अनापकृत्य मोक्षं तु सेवमानो व्रजत्यघः ॥ (जा.स्मृ.)
"ब्रह्मचर्य समाप्य गृही भवेत् ,गृहाद्वनी भूत्वा प्रव्रजेत् "(जा.उ.४) इत्यादि प्रमाणानुसारेण ब्रह्मज्ञनान्तरङ्गभूतसंन्यासस्यापि कालो विधीयत इव प्रतिभाति । अथापि अशुद्धचित्तो राक्षसराजो विरोचनः ब्रह्मलोकं गतोऽपि परमगुरुणा परमेष्ठिना उपदिष्टोऽपि नैवाग्रहीदात्मानम् ।
संसारमेव निस्सारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ।। इति
"यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् " (जा.उ.४.४) इत्यादिप्रमाणैः वक्ष्यमाण-वैराग्यादिसाधनचतुष्टयसंपन्नस्य देशकालौ न विवक्षितौ इत्यभिप्रायेण तयोस्सहकारित्वमुक्तम् । अत एव, " विद्वान् संन्यस्तबाह्यार्थसुखस्पृहस्सन् " (श्लो.८) इति विवेकवैराग्ये ब्रह्मात्मनाऽवस्थानलक्षणमोक्षसाक्षाद्धेतुभूतसम्यग्दर्शननिष्ठार्थं मोक्षसाधनोपदेशकगुरूपसदनपुरस्सरतदुपदिष्टार्थमनस्समाधाने हेतूकृते । एतादृशमनस्समाधानस्य शमदमोपरतितितिक्षा-श्रद्धानामभावे असम्भवात् मुक्तीच्छाभावे तदर्थं प्रयत्नासम्भवाच्च, "अतो विमुक्त्यै" (श्लो.८) इत्याद्यशलोके विवेकवैराग्य –शमादिषट्कमुमुक्षुत्वानां जिज्ञासा साधारणहेतूनां सूचनं कृतमेव । तथा च "तरति शोकमात्वमित्" (छा.उ.७.१.३), "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" (मुं.उ.१.२.१२) इत्यादिश्रुत्यनुसारेण शोकशब्दितबन्धनाशकं सम्यज्ज्ञानं सद्गुरुपदिष्टार्थविचारमन्तरा न केनापि साधनान्तरेणेति । श्लोके अस्यामित्यस्य सिद्धावित्यर्थः ॥१४॥

अतो विचार: कर्तव्य: जिज्ञासोरात्मवस्तुन:
समासाद्य दयासिंधुं गुरुं ब्रह्मविदुत्तमम् ॥१५॥

अन्वयः

अतः दयासिन्धुं ब्रह्मविदुत्तमम् गुरुं समासाद्य जिज्ञासोः आत्मवस्तुनःविचारः कर्तव्यः||१५||
भाष्यम् –
अतः सर्वानर्थनिवर्तकनिर्णयहेतुत्वात् जिज्ञासोः आत्मानं सम्यज्ज्ञातुमिच्छोः पुरुषस्य आत्मवस्तुनः विचारः कर्तव्यः । तत्र इति कर्तव्यतामाह - दयासिंधुं स्वयं कृतार्थत्वेन स्वस्य प्रयोजनाभावः सिद्ध एव, इतरेऽपि मा दुःखमनुभूवन्निति करूणायाःसमुद्रम् । आधारमित्यर्थः । जलराशिरिव जलानाम । गुरुम् –
गुशब्दस्त्वन्धकारस्याद् रुशब्दस्तन्निरोधकः।
अन्धकारनिरोधित्वाद् गुरुरित्यभिधीयते ॥

इति गुरुगीतोक्तरीत्या स्वोपदेशेन अज्ञानाख्यहार्दान्धकारहारकम् इत्यर्थः । यथान्धकारः प्रपञ्चमावृत्य तज्ज्ञानप्रतिबन्धको भवति एवमज्ञानमात्मानमावृत्य तत्स्पष्टभानप्रतिबन्धकं भवतीत्यन्धकारत्वमज्ञानस्य । अत एव तम इत्यादिशब्दैरभिलापः श्रुतौ "तमोह्यासीत् तमसा गूल्हमग्रे " (ऋ.८.७.१७) इत्यादौ । एतद्विशेषणद्वयं यत्र सम्भवति तमाह - ब्रह्मविदुत्तममिति । ब्रह्म विदन्तीति ब्रह्मविदः तेषामुत्तमं स्थितप्रज्ञमित्यर्थः ।अत्र श्रुतयः पूर्वमुदाहृताः।
तत्समासादनं च –
तमाराध्य गुरुं भक्त्या प्रह्वः प्रश्रयसेवनैः । (श्लो.३६) इति, वक्ष्यमाणरीत्या –
"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया"। (४.३४)
इति गीतोक्तरीत्या च तस्य स्वात्माभिमुखीकरणमिति । अतो विमुक्त्यै इत्यष्टमश्लोकस्य इयद्भिः श्लोकैः विवृतिः कृता ॥१५॥

मेधावी पुरुषो विद्वान् ऊहापोहविचक्षणः ।
अधिकार्यात्मविद्यायामुक्तलक्षणलक्षितः ॥१६॥

अन्वयः
उहापोहविचक्षणः विद्वान् मेधावी पुरुषः उक्तलक्षणलक्षितः आत्मविद्यायाम् अधिकारी॥ १६॥
भाष्यम् –
अधिकारिणमाशास्ते फलसिद्धिर्विशेषतः (श्लो.१४)
इत्युक्तमधिकारिणं प्रकृते कथयति मेधावीत्यादिना –
"धीर्धारणावती मेधा" (अ.को. १.५.२) इति कोशात् श्रुतार्थ धारणक्षमबुद्धिमानुच्यते मेधाऽस्यास्तीति व्युत्पत्या मेधावीशब्देन विद्वानिति अधीतकाव्यकोशव्याकरणः उच्यते । ऊहापोहविचक्षणः एतेन तर्कमीमांसासंस्कृतबुद्धित्वं गम्यते । पदवाक्यप्रमाणज्ञ इति यावत् उक्तलक्षणलक्षित इति अष्टमश्लोकादारभ्य पञ्चदशश्लोकमध्यपातिश्लोकैः समासव्यासाभ्यां सूचितविवेकवैराग्य-शमादिषट्कमुमुक्षुत्वरूपसाधनचतुष्टयसम्पन्न इत्यर्थः । आत्मविद्यायाम अधिकारी आत्मविद्याफलं मोक्षमनुभवितुमर्हतीत्यर्थः ॥१६॥

उक्तानि लक्षणानि स्फुटप्रतिपत्तये क्रोडीकृत्याह विवेकिन इति । यद्वा - उक्तं लक्षणं जिज्ञासुत्वम् ।
"अतोविचारः कर्तव्यो जिज्ञासोरात्मवस्तुनः" (श्लो.१५) इत्यत्र जिज्ञासुरेव मेधावित्वादिविशेषणविशिष्टः आत्मविद्याफलभाक् । इदानीं जिज्ञासायां कस्याधिकार इति चेत्, पूर्वमष्टमश्लोके विद्वान्संयस्तबाह्यार्थसुखस्पृहस्सन्, उपदिष्टार्थसमाहितात्मा इति, दशमश्लोके धीरैरिति शब्दसूचितस्य साधनचतुष्टयसम्पत्तिविशिष्टसयेत्याह विवेकिन इति -

विवेकिनो विरक्तस्य शमादिगुणशालिनः ।
मुमुक्षोरेव हि ब्रह्मजिज्ञासायोग्यता मता ॥१७ ॥

अन्वयः
ब्रह्मजिज्ञासायोग्यता मता विवेकिनः विरक्तस्य शमादिगुणशालिनःमुमुक्षोःएव हि॥ १७॥

भाष्यम् –
विवेकादिस्वरूपं स्पष्टयिष्यते मूल एवोपरिष्टात् (श्लो.१९) ज्ञातुमिच्छा जिज्ञासा, ब्रह्मणॊ जिज्ञासा ब्रह्मजिज्ञासा तत्रावगति पर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म ।अखण्डकारवृत्तिप्रतिफलितं चैतन्यं जिज्ञासापदलक्ष्यमाणविचारस्य फलम् । सामान्यतो ब्रह्मज्ञानस्य विचारात्पूर्वमपि सत्त्वात् एतादृशमिष्टं संपादनीयं चेत् –

दद्यान्नावसरं किंचित् कामादीनां मनागपि ।
आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया ॥
इत्युक्तरीत्या सार्वदिकवेदान्तविचार आवश्यकः।
देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥
इत्युक्तज्ञानं जनयितुं स एव समर्थः ॥१७॥

एतादृशविचारजननी या इच्छा तत्र योग्यता विवेकादिसाधनयुतस्यैव नान्यस्येत्येवकारबोधितमर्थमन्वयेन व्यतिरेकेण च स्पष्टयति - साधनानीति ।

साधनान्यत्र चत्वारि कथितानि मनीषीभिः ।
येषु सत्स्वेव सन्निष्ठा यदभावे न सिद्ध्यति ॥१८ ॥
अन्वयः
अत्र मनीषिभिः चत्वारि साधनानि कथितानि येषु सत्सु एव सन्निष्ठा(सिध्यति) यद अभावे न सिध्यति॥ १८॥

भाष्यम् –
लोके यस्य तावत् कार्यत्वेनाभिमतसमानाधिकरणात्यन्ताभावप्रतियोगित्वं स्वसमानाधिकरणात्यन्ताभावप्रतियोगि-कार्यत्वाभिमतकत्वं वा तस्य तत्कारणत्वं न संभवति । यथा पटसमानाधिकरणात्यन्ताभावप्रतियोगिनी मृत्, मृत्समानाधिकरणात्यान्ताभाव प्रतियोगिपटवती वा सा पटकारणत्वं नाश्नुते । अपि तु मृत्सत्वे घटसत्वं मृदभावे घटाभाव इत्यन्वयव्यतिरेकसहचारग्रहवशात् घटकारणत्वं भजते ।एवं विवेकादिचतुष्टयसत्त्व एव सति ब्रह्मणि नितरां स्थितिप्रयोजक ब्रह्मजिज्ञासायाः सम्भवात् तदभावे चासम्भवात् अन्वयव्यतिरेकसहचारग्रहाधीना तेषां विवेकादीनां सन्निष्ठापरपर्यायफलपर्यन्त-ब्रह्मजिज्ञासाकारणत्वावगतिः इत्युक्तम् । मनीषिभिः कथितानीति । तत्र मनीषित्वं च श्रुतितात्पर्यज्ञानवत्त्वम् । श्रुत्यवलम्बनाभावे एतादृशाधिकारिविशेषणानां दुर्ज्ञानत्वात् । तादृशाश्च मनीषिणः बादरायणप्रभृतयः। ते किल "अथातो ब्रह्मजिज्ञासा" (ब्र.सू.१.१.१) इति सूत्रघटकाथशब्देन साधनचतुष्टयसम्पत्त्यानन्तर्यं सूत्रयन्तः ब्रह्मजिज्ञासाधिकारिणमेवं विधं सूत्रयामासुः इति शारीरकमीमांसाद्याधिकरणतृतीयवर्णकभाष्याद अर्थतोऽवगम्यते। एतादृशविशेषणलम्भकश्रुतयस्तु 'यत्कृतकं तदनित्यम्' इति न्यायवती "तद्यथेहकर्मचितो लोकःक्षीयते एवमेवामुत्र पुण्यचितो लोकःक्षीयते" (छां.उ.८.१.६), "यो वै भूमा तदमृतम्, अतोऽन्यदार्तम्" (छां.उ.७.२४.१), "न जायते म्रियते वा विपश्चित् " (क.उ.२.१८) इत्यादिश्रुतिः आत्मनः नित्यत्वम्, अनात्मनः अनित्यत्वं च बोधयतीति विवेकलम्भिका । "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" (मु.उ.१.२.१२), "न वा अरे पत्युः कामाय (बृ.उ.२.४.५) इत्यारभ्य, "आत्मनस्तु कामाय सर्वप्रियं भवति" (बृ.उ.) इत्यन्ता श्रुतिः अनात्ममात्रे वैराग्यप्रतिपादिका । "शान्तो दान्त उपरतस्तितिक्षुः समाहितःश्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत् "(बृ.उ.४.४.२३) इति श्रुतिः शमादिषट्कं बोधयति। "न स पुनरावर्तते" (छां.उ.८.१५.१) इति श्रुतिः मोक्षस्य नित्यत्वं वदन्ती तत्रेच्छामादधाति। उपनिषदामर्थवादत्वं वदतां कर्ममीमांसकानां मते एतासां स्वार्थे तात्पर्यं नास्तीत्येव ज्ञानसम्भवात् "ब्रह्मजिज्ञासितव्यं", तत्र च एतादृशविशेषण विशिष्टोऽधिकारीति ज्ञानस्य दुर्लभत्वात् मनीषिभिः कथितानीत्युक्तम् । तथा च प्रमाणान्तरानधिगत-कालत्रयाबाध्यपरमपुरुषार्थस्वरूप ब्रह्मप्रतिपादकत्वादुपनिषदां तात्त्विकप्रामाण्यस्यात्रैव सम्भवात् तत्तद्वाक्यसमर्पित-विवेकादिविशिष्टस्यैव "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" (छां.उ.८.७.१) इत्यादिवाक्यविहितजिज्ञासायोग्यतेति सर्वं चतुरस्रम् ॥१८॥

तत्र विवेकिनो विरक्तस्ये (श्लो.१७)त्यादिना कथितं विवेकादिकं क्रमतो निर्दिशति आदावित्यादिना –

आदौ नित्यानित्यवस्तुविवेकः परिगण्यते ।
इहामुत्रफलभोगविरागस्तदनन्तरम् ॥१९॥
शमादिषट्कसंपत्तिः मुमुक्षुत्वमिति स्फुटम् ।

अन्वयः

आदौ नित्यानित्यवस्तुविवेकःतदनन्तरं इहामुत्रफलभोगविरागःशमादिषट्कसम्पत्तिःमुमुक्षुत्वं इति स्फुटम् परिगण्यते ||१९॥
भाष्यम् –
विवेकादीनां मध्ये पूर्वपूर्वस्य उत्तरोत्तरहेतुत्वात् क्रमः समाश्रितः। इदं नित्यं इदमनित्यमिति जनानः किल अनित्याद्विरज्येत । अतः नित्यानित्यवस्तुविवेकाभावे वैराग्यं दुस्सम्पादम् इति विवेकस्य वैराग्यहेतुत्वम् । वैराग्यवत एव पुरुषस्य अन्तर्बहिरिन्द्रिय-निरोधरूपशान्तिदान्ती । तत्रापि निरुद्धान्तःकरणस्यैव बहिरिन्द्रियनिरोधरूपदमः मनस्सम्बन्धाभावे इतरेषामिन्द्रियाणामकिञ्चित्करत्वात् । तर्हि शमे सति दमस्य स्वतस्सिद्धत्वात् किमिति तस्य साधनकोटिप्रविष्टत्वमिति चेत् , "इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः"| (२.६०) इति गीतोक्तरीत्या बाह्येन्द्रियनिरोधाभावे शमस्य दृढत्वाभावात्। जितेन्द्रियस्यैव उपरमशब्दितसंन्यासः, तस्यैव शीतोष्णादि-

द्वन्द्वसहिष्णुत्वरूपा तितिक्षा, तस्यैव बाह्यविक्षेपाभावात् ब्रह्मण्यैदम्पर्येणावस्थानलक्षणं समाधानम्, एतादृशगुणविशिष्टस्यैव ब्रह्मैकमस्ति जगन्मिथ्ये इत्युपदिश्यमानगुरुवेदान्तवाक्य विश्वासरूपश्रद्धा इति । शमादिषट्कमध्येऽपि पूर्वापरीभावे कारणं सुवचम्। एतादृशः किल पुरुषधौरेयः मोक्षादन्यन्न कामयते, तत्र विलम्बं च न सहत इति तीव्रमुमुक्षावान् भवितुमर्हति इत्यभिप्रायेण आदौ नित्यानित्येत्याद्याह। तदनन्तरं इहामुत्रफलभोगविराग इति च । तेन विवेकानन्तर्यस्य वैराग्ये कथनेन 'तदुदितः स हि यो यदनन्तरः' इति न्यानेन विवेककार्यत्वं वैराग्ये उक्तप्रायम् । तदनन्तरमिति उत्तरत्राप्यनुषज्यते वैराग्यानन्तरं शमादिसंपत्तिः, तदनन्तरं मुमुक्षुत्वमिति ॥१९॥
उक्तसाधनानि विवृणोति - ब्रह्मेत्यादिना ।

ब्रह्म सत्यं जगन्मिथ्येत्येवं रूपो विनिश्चयः ॥२०॥
सोयं नित्यानित्यवस्तुविवेकः समुदाहृतः ॥२०१/२॥

अन्वयः
ब्रह्म सत्यं जगत् मिथ्या इति एवं रूपः विनिश्चयः सः अयं नित्यानित्यवस्तुविवेकः समुदाहृतः॥ २०॥
भाष्यम् –

ब्रह्म नित्यं जगदनित्यमिति निश्चयसत्वेऽपि दृढं वैराग्यं न सम्भवति, अनित्यसुखस्यापि प्रायः काम्यमानत्वात् । जगन्मिथ्येत्युक्ते मिथ्याभूतार्थः केनापि न काम्यते । न हि स्वाप्निकं राज्यं कामयन्ते राज्यकामयितारः। अतः वैराग्यस्य नियतमुत्पत्तये ब्रह्म नित्यं जगदनित्यमित्यनुक्त्वा ब्रह्म सत्यं जगन्मिथ्येत्याह ।विनिश्चय इति विशेषेण निश्चय इत्यर्थकेन निश्चयेऽप्रामाण्यज्ञानानास्कन्दितत्वमुक्तं भवति । सोयमिति, सः विवेकिन इत्यत्र विवेकिविशेषणत्वेनोक्तः, अयम् आदौ नित्यानित्यवस्तुविवेक इत्युक्तः इत्यर्थः ।
अस्यैव ऐहिकामुष्मिकफलभोगविरागहेतुत्वं नियतमिति समुदाहृत इत्यत्र समित्युपसर्गेण द्योतितम् ॥२०१/२ ॥

विवेकं निरूप्य वैराग्यं निरूपयति तद्वैराज्यमिति –

तद्वैराग्यं जुगुप्सा या दर्शनश्रवणादिभिः ॥२१॥
देहादिब्रह्मपर्यन्ते ह्यनित्ये भोग्यवस्तुनि ॥२११/२॥

अन्वयः
दर्शनश्रवणादिभिः देहादिब्रह्मपर्यन्ते हि अनित्ये भोगवस्तुनि या जिगुप्सा(जिहासा) तद्वैराग्यं ॥ २१॥
भाष्यम् –
ऐहिकदेहादिभोग्यवस्तुनः दर्शनेन, आमुष्मिकदिव्यदेहादि भोग्यवस्तुनः श्रवणेन, आदिपदेन दृष्टजातीयस्य श्रुतजातीयस्य अनुमानेन । अनुभूयमानशरीरप्रभृतिब्राह्ममानेन शतवर्षजीविचतुर्दशभुवनाधिपत्यावच्छेदकहिरण्यगर्भशरीरपर्यन्तं सर्वस्मिन् भोग्यस्तुनि अनित्ये मिथ्याभूते या जुगुप्सा, कदापीदृशपदार्थसम्बन्धो माभूदिति, काकविष्ठायामिवासह्यबुद्धिः तद्वैराग्यम् । 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' (र.व.) इतिवद विधेयप्राधान्यात् नपुंसकनिर्देशः तदिति।
स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
वैराग्यकारणं तस्य किमन्यदुपदिश्यताम् (नि.पु.)
सततं प्रवाह्यमानैः वृषभैःअश्वैः खरैर्गजैः महिषैः ।
हा कष्टं क्षुत्क्षामैः श्रान्तैर्नो शक्यते वक्तुम् ॥ (स.वे.सि.सा.सं)

"तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" (छां.उ.८.१.६), "भूम्नोन्यदार्तम्" (बृ.उ.३.४.२, छां.उ.७.२४), " क्षीणे पुण्ये मर्त्यलोकं विशन्ति" (भ.गी.९.२१), "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोर्जुन" (भ.गी.८.२६) सूतसंहितायां यज्ञवैभवखण्डे सप्तदशोऽध्यायः, सर्ववेदान्तसिद्धान्तसारसङ्ग्रहस्थाः 'कुक्षौ स्वमातुर्मलमूत्रमध्ये ' (श्लो.२७) इत्यादिना
पुण्यक्षये पुण्यकृतो नभस्थैः
निपात्यमानान् शिथिलीकृताङ्गन् ।
नक्षत्ररूपेण दिवश्चयुतांस्तान्
विचार्य को वा विरतिं न याति ॥
यत्रास्ति लोके गतितारतम्यं

इत्यन्ताश्च (श्लो.३९) श्लोकाः वैराग्यविषयेऽनुसंधेयाः । मानुषदेहादेः रोगाद्युपप्लुतत्वं, पश्वादीनामत्यन्तपारतन्त्र्यं मूकत्वादि, देवानां राक्षसादिपीडितत्वं, शब्दादीनां विषयाणां बहुविधानर्थप्रदत्वं कुरङ्गादिदृष्टान्तैः अनुसन्दधानस्य सर्वत्रानात्मसु जुगुप्सा सुलभेति भावः। एतच्च 'शब्दादिभिः पञ्चभिरेवे' (श्लो.७८) इत्यादिना स्वयमुत्तरत्र स्पष्टयिष्यते । यद्यपि "अपाम सोमममृता अभूम" (ऋ.६.४.११) "अक्षय्यं ह वै

चातुर्मास्ययाजिनस्सुकृतं भवति " (श.ब्रा.२.६.३.१) इति श्रुत्यवलोकनेन कर्मफलस्यापि नित्यत्वं प्रतीयते। अथापि 'यत्कृतकं तदनित्यम्' इति न्यायसहकृत- तद्यथेह कर्मचित (छां.उ.८.१.६) इत्यादिश्रुत्यनुसारेण अमृताक्षय्यपदयोः सङ्कुचितार्थकत्वस्यावश्यं वक्तव्यत्वात् न दोषः । उक्तं हि –

"आभूतसम्पल्वं स्थानममृतत्वं हि भाष्यते"। (वि.पु.) इति ॥२११/२॥

शमस्वरूपं ब्रवीति विरज्येति –

विरज्य विषयव्रातात् दोषदृष्ट्या मुहुर्मुहुः ॥२२॥
स्वलक्ष्ये नियतावस्था मनसः शम उच्यते ॥२२१/२॥

अन्वयः

दोषदृष्ट्या विषयव्रातात् मुहुर्मुहुः विरज्य स्वलक्ष्ये मनसः नियतावस्था (सः) शम उच्यते॥ २२॥

भाष्यम् –

आद्यन्तवत्व- बहुवित्तव्ययायाससाध्यत्व - परिणतिविरसत्वादिदोषान् पुनःपुनः विषयेषु पश्यतः पुरुषस्य तत्र वैराग्यं नियतमिति विषयदोषदर्शनं वैराग्यहेतुरिति ।तस्मिंश्च वैराग्ये सति मनस्स्वलक्ष्ये सुगुणे निर्गुणे वा नियतमवतिष्ठमानं निश्चलं निर्विकारं भवतीति मनोनियतावस्थारूपशमस्य वैराग्यजन्यत्वमाह विरज्येति । तत्र ल्यपा उत्तरकालिकत्वस्य बोधनात् वैराग्यजन्यत्वं बोधितं भवति ॥ २२१/२ ॥

दमं निरूपयति विषयेभ्य इति -

विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके ।।२३॥
उभयेषामिन्द्रियाणां स दमः परिकीर्तितः ॥२३ १/२ ॥

अन्वयः

विषयेभ्यः उभयेषां इन्द्रियाणां परावर्त्य स्वस्वगोलके स्थापनं सः दमः परिकीर्तितः॥ २३॥

भाष्यम् –

मनसः विषयविचारसामर्थ्यसत्त्वात्स्वत एव विरज्येत्युक्तम् बाह्येन्द्रियाणां श्रोत्रादीनां ज्ञानकरणानां, वागादीनां कर्मकरणानां च स्वतस्तत्र सामर्थ्याभावात् प्रग्रहस्थानीयेन मनसा अश्वस्थानीयानां बहिन्द्रियाणां शब्दादिरूपविषममार्गेभ्यः परावर्त्य पराङ्मुखीकृत्य स्वस्वगोलके कर्णशष्कुलीवदनादिदेशेषु स्थापनं उपरतव्याप्रारता सम्पादनं यत् स दमः परिकीर्तितः । मन आदीनां प्रग्रहादिरूपत्वं कठोपनिषद्युक्तम् (१.३.३.४) –

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।
इद्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
इति मार्गानित्यर्थः॥२३ १/२॥

दमरूपबहिरिन्द्रियनिग्रहसाध्यामुपरतिमाह बाह्येति –

बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा ॥ २४ ॥

अन्वयः

(अन्तःकरण)वृत्तेःबाह्यानालम्बनं एषा उत्तम उपरतिः॥ २४॥

भाष्यम् –

तटाकोदकस्य तटाकच्छिद्रद्वारा निर्गत्य यथा क्षेत्राद्यात्मना परिणामः, एवमन्तस्थस्य मनसः श्रोत्रादिच्छिद्रद्वारा बहिरागत्य शब्दादिविषयाकारेण परिणामरूपा वृत्तिर्जायते । निगृहीतेषु च बहिरिन्द्रियेषु अन्तस्थं मनः न बाह्याकारेण परिणमत इति भावः॥२४॥

यदा बाह्यं नालम्बते चित्तं तदा शीतोष्णादिद्वन्द्वस्य अप्रतीयमानत्वात् कर्मकालादिवशात् तत्प्रसक्तावपि तत्सहनरूपा तितिक्षा सिद्ध्यतीत्याह सहनमिति –

सहनं सर्व दुःखानां अप्रतीकारपूर्वकम् ।
चिन्ताविलापरहितं सा तितिक्षा निगद्यते ॥२५॥

अन्वयः
सर्वदुःखानाम् सहनं अप्रतीकारपूर्वकं चिन्ताविलापरहितं सा तितिक्षा निगद्यते॥ २५॥
भाष्यम् –
कम्बलव्यजनादिभिः शैत्योष्ण्यादिदुःखप्रतीकारः लोकसिद्धः । तादृशसामग्र्यभावे किमस्माभिर्दीनैः करणीयमिति चिन्ता, प्रलापश्च। विचारसाधनतितिक्षायास्तथात्वं व्यावर्तयति अप्रतीकार-पूर्वकं चिन्ताविलापरहितं यत्सहनं सा तितिक्षेति । दुःखानां दुःखहेतु-शीतोष्णादीनामित्यर्थः। चिन्ताविलापादिसहितस्य मनसः विचारस्य दूरापास्तत्वादिति भावः ॥२५॥

इदानीं वस्तूपलब्ध्यसाधारणकारणं श्रद्धां निरूपयति शास्त्रस्येति –

शास्त्रस्य गुरुवाक्यस्य सत्यबुध्यावधारणा ।
सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते ॥२६॥

अन्वयः
शास्त्रस्य गुरुवाक्यस्य (च) सत्यबुद्ध्यवधारणा सा सद्भिःश्रद्धा (इति) कथिता यया वस्तु उपलभ्यते॥ २६॥
भाष्यम् –
लोकेऽपि आप्तवाक्ये विश्वासाभावे नैव तदनुसारेण प्रवर्तते पुरुषः विचारादौ । किमुतातीन्द्रिये शास्त्रार्थे, अतः सा परमकारणम् । उक्तं हि गीतायां (९.३)
अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ।। इति ।

यस्तावत् शान्तो दान्त उपरतस्तितिक्षुश्च स एव ब्रह्मैकमेव सत्यं तदेव त्वं अन्यत्सर्वं मिथ्या इति गुरुणा वेदान्तैश्च बोध्यमानं वस्तु विश्वसिति इदमेवमेवेति । नान्यस्तादृशसाधनहीनः इति श्रद्धा तदनन्तरं परिगणिता गुरुवेदान्तवाक्यविषयिणी । शास्त्रं
तत्त्वमस्यादिशास्त्रं गुरुवाक्यं तदनुसारि नासित्वं संसारी किन्तु नित्यशुद्धबुद्धमुक्तस्वभावं परं ब्रह्मैव अन्यत्सर्वं मिथ्या इत्यादि वाक्यं तस्य सत्यम् अबाधितार्थबोधकम् इति बुध्या, अवधारणा दृढविश्वासः , यया वस्तूपलभ्यते सा श्रधा इति सद्भिः कथितेत्यन्वयः ॥२६॥

एतादृशश्रद्धावतएव समाधानं सम्यक्सिद्ध्यतीति तदनन्तरं समाधानं निरूपयति सम्यगिति –

सम्यगास्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वदा ।
तत्समाधानमित्युक्तं न तु चित्तस्य लालनम् ॥२७॥
अन्वयः

शुद्धे ब्रह्मणि सर्वदा सम्यगा बुद्धेः स्थापनं तत् समाधानं (इति)उक्तम् तु न चित्तस्य लालनम्॥ २७॥
भाष्यम् –
यद्यपि स्वलक्ष्ये नियतावस्थारूपशमापेक्षया भेदो न लक्ष्यति ईदृशे समाधाने , तथापि 'मुहुर्मुहुः दोषदृष्ट्या विषयेभ्यो विरज्य स्वलक्ष्ये नियतावस्था ' (श्लो.२३) इत्यनेन
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतत् आत्मन्येव वशं नयेत् ॥ (६.२६)
इति गीतोक्तरीत्या शमावस्थायां प्रयत्नविशेषोऽपेक्ष्यते संकल्पविकल्पात्मकस्य मनसः स्थिरीकरणे ।
अत एवात्र अध्यवसायात्मिकायाः बुद्धेः शुद्धे ब्रह्मणि सम्यगास्थापनं सर्वदा इत्यनेन संकल्पविकल्पविनिर्मुक्तत्वमन्तःकरणस्य प्रकृते कथितं भवति । अत एव मनःशब्दं विहाय निर्णयात्मकवृत्तिमद्बुद्धिशब्दः प्रायोजि। तत्रापि शुद्धे ब्रह्मणीति निर्गुणं कथ्यते सर्वोपाधिविनिर्मुक्तम् । शमनिरूपणावसरे स्वलक्ष्ये नियतावस्थेत्यनेन सगुणे नियतावस्थानेऽपि शान्तत्वं मनसो वक्तुं शक्यम् । शम इति साधनं कथ्यते , समाधानं तस्य फलं तस्यैव परिपाक इति यावत् । लोके बालका विशेषतो रुदन्ति चेत् तदिष्टं दत्वा समादधते जनाः, तद्वत् मनसो यथेष्टं विषयमार्गसञ्चरणं न समाधानमित्याह न तु चित्तस्य लालनमिति । यद्वा –
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥१॥
अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ।
स्वमनःपुरुषार्थेन बलेन बलिनां वर ।।२॥
अशुभाच्चालितं याति शुभं तस्मादपीतरत् ।

जन्तोश्चित्तं तु शिशुवत् तस्मात्तच्चालयेद् बलात् ।।३॥
समतासान्त्वनेनाशु न द्रागिति शनैः शनैः ।
पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम् ।।४॥
इति वासिष्ठरीत्या चालनं लालनं वा शमादिसाधनत्वेन पूर्वमपेक्ष्यते ।
न तु फलीभूतसमाधानावस्थायां , तदाभ्यासं विनापि शमादिसम्पादनकाले कृतप्रयत्नेनैव क्षीणबाह्यवासनस्य मनसः सगुणात्प्रच्यावनमात्रस्य निर्गुणे स्थापयितुमपेक्षितत्वात् इति ॥२७॥

एतादृशसाधनगणमण्डितस्यैव मुमुक्षुत्वं सन्भवति नान्यस्येति इदानीं मुमुक्षुत्वमाह अहङ्कारादीति –

अहङ्कारादिदेहान्तान् बन्धानज्ञा~कल्पितान् ।
स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता ॥२८॥
अन्वयः

स्वस्वरूपावबोधेन अहंकारादिदेहान्तान् बन्धान् अज्ञानकल्पितान् मोक्तुं इच्छा (सा) मुमुक्षुता॥ २८॥
भाष्यम् –

अन्तःकरणमेतेषु चक्षुरादिषु वर्ष्मणि ।
अहमित्यभिमानेन तिष्ठत्याभासतेजसा ।।
अहङ्कारः स विज्ञेयः (श्लो.१०५,१०६)
इत्युक्त्या चित्प्रतिफलनोपेतमन्तःकरणम् अहङ्कारः । यद्वा भोक्ता जीवोऽहङ्कारः आनन्दमयकोशनामा, स्वात्मनिरूपणे - सुस्निगतैस्सुखलेशैः अभिमनुते सुखीभवामीति ।
आनन्दकोशनामा सोऽङ्हंकारः कथं भवेदात्मा
इयुक्तत्वात् । तस्याप्यज्ञानकल्पितत्वं मनोरूपोपाधिवशाद्विकारत्वं च गौणं वक्तुं शक्यम् । तथा च आनन्दकोशप्रभृतिविज्ञानमय-मनोमयप्राणमयान्नमयान्तान् बन्धान् स्वरूपसाक्षात्कारात्प्रागात्मत्वेन मन्यमानान् स्वस्वरूपावबोधेन मोक्तुं पुनस्तत्र यथाऽहन्ता न स्यात् तथा व्यक्तुं बाधितुमित्यर्थः । या इच्छा सा मुमुक्षुता । स्वस्वरूपावबोधे हि
“यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् “ (बृ.उ.४.५.१५) इति श्रुत्या स्वव्यतिरिक्तस्य कस्यापि भानाभावेन कोश-पञ्चकात्मकबन्धनिवृत्तिरत्यन्तमिति भावः ॥२८॥

इयं तावत् मुमुक्षुता त्रिविधा - मन्दा मध्यमा प्रवृद्धा चेति । मोक्षस्य नित्यसुखरूपत्वेऽपि सांसारिकवासनावासितातःकरणानां मोक्षेच्छैव दुर्लभा । अध्यात्मशास्त्रश्रवणकाले जाता सा न कार्यमादधाति।
यदा पुरुषः श्रवणानन्तरजातविवेकेन विषयेषु सांसारिकेषु दोषान् दर्शं दर्शं तत्र वैराग्यं लब्ध्वा विधिवत्संन्यस्य सर्वकर्माणि, विचारार्थं गुरूपसदनादौ प्रवर्तते तदा अध्यात्मशास्त्रश्रवणकाले जाता तात्कालिक्येव मुमुक्षुता मन्देति नामार्हैव मध्यमत्वं प्राप्नोति । यथा यथा तीव्रं वैराग्यं मनश्चोपशान्तं समाधित्सति गुरुश्चस्मिन्प्रसीददति क्षिप्रमयं तरतु भवाब्धिमिति तदा पुरुषः नित्यसुखरूमोक्षादन्यन्न कामयते तत्र विलम्बं च न सहत इति प्रवृद्धमुमुक्षुः मुख्याधिकारी भूत्वा क्षिप्रं लभते फलमित्याह मन्देति-
मन्दमध्यमरूपाऽपि वैराग्येण शमादिना ।
प्रसादेन गुरोःसेयं प्रवृद्धा सूयते फलम् ॥२९॥

अन्वयः
मन्दमध्यमरूपापि सूयते फलम्(इति)सा इयं प्रवृद्धा गुरोः प्रसादेन वैराग्येण शमादिन || २९||
भाष्यम् –
इत्थं च मुमुक्षाया मोक्षेच्छारूपत्वेऽपि यदा सा प्रवृद्धा तदैव फलं प्रसूत इत्यनेन तत्प्रवृद्ध्यर्थं विषयवैराग्य-शमादिषट्क-गुरुप्रसादलाभार्थं प्रयत्नः कर्तव्यः पुरुषेणेत्युक्तं भवति ॥२९॥
साधनचतुष्टयमध्ये द्वितीयतुरीयसत्त्वे सर्वं तत्रास्ति नान्यथेत्याह । वैराग्यमिति -

वैराग्यं च मुमुक्षुत्वं तीव्रं यस्य तु विद्यते ।
तस्मिन्नेवार्थवन्तः स्युः फलवन्तः शमादयः ॥३०॥

अन्वयः
शमादयः अर्थवन्तः स्युः फलवन्तःतस्मिन् एव यस्य तु तीर्वं वैराग्यं च मुमुक्षुत्वं (अस्ति)॥ ३०॥

भाष्यम् –
अर्थवन्तश्शमादय इत्यत्र शमादय इत्यस्य शमादिशब्दा इत्यर्थः ।तस्मिन्पुरुषे शमादयस्सन्तीति व्यवहारस्सार्थक इति भावः । अयं शान्तो दान्तः इत्यादिशब्दभाक् तीव्रवैराग्यवान् तीव्रमुमुक्षुतावांश्चेत्यर्थः तीव्रमुमुक्षुत्वस्यैव शमादिफलत्वात् । यदि तीव्रमुमुक्षुत्वं तदा साधनं विना फलालाभात्कार्यात्कारणमनुमीयत इति शमादिमत्त्वं तस्य सुवचम् । एवं शमादिसाधनं तीव्रवैराग्यं यदा तस्मिन् ज्ञायते , साधने सति फलावश्यम्भावात् शमादिमत्वं तस्मिन्नवर्जनीयम् । इत्थं च शमादिसाधने सति तीव्रवैराग्यशमादिफले च तीव्रमुमुक्षुत्वे स्वसाधनफलमध्यवर्ति स्वयं निरपवादमिति भावः । तीव्रवैराग्ये शमादिश्ब्दाः अर्थवन्तः, तीव्रमुमुक्षुत्वे शमादयः फलवन्तः इति विभागः । शमादीनामितरान्तःकरणनिष्ठानां दुर्ज्ञानत्वात् कारणकार्याभ्यामवगन्तव्यमुक्तम् । स्वयमपि पुरुषेण शान्त्यादिकं समपादीति कथं ज्ञेयमित्युक्तौ पुष्कलकारणे तीव्रवैराग्ये विशिष्टफले तीव्रमुमुक्षुत्वे च सति तथेति स्वस्मिन् परस्मिंश्च कारणकार्ये ज्ञापके इति भावः।
काकस्य विष्ठावदसह्यबुद्धि-
भोंग्येषु सा तीव्रविरक्तिरिष्यते ।
विरक्तितीव्रत्वनिधानमाहुः
भोग्येषु दोषेक्षणमेव सन्तः ॥ (श्लो.२४)
इति वैराग्ये तीव्रत्वं तत्साधनं च कथितं सर्ववेदान्तसिद्धान्तसारसङ्ग्रहे । मुमुक्षुत्वे तीव्रत्वं प्रवृद्धत्वमेव । तत्तु प्रागभिहितम् ॥३०॥

एतयोर्मन्दता यत्र विरक्तत्वमुमुक्षयोः ।
मरौ सलिलवत्तत्र शमादेर्भानमात्रता ॥३१॥

अन्वयः
यत्र विरक्तत्वमुमुक्षयोः एतयोः मन्दता (अस्ति) तत्र मरौ सलीलवत् शमादेः भानमात्रता॥ ३१॥
भाष्यम् –
यत्र यस्मिन्पुरुषे एतयोः विरक्तत्वमुमुक्षयोः मन्दता तात्कालिकत्वं मरौ सलिलवत्, निदाघसमये मरुभूमौ चण्डकिरणसम्पर्के दूरस्थस्य तत्र जलमस्तीति भ्रान्तिर्भवति न जललाभः तत्र नैव पिपासानिवृत्तिः, प्रत्युत श्रान्तस्य तत्र जलधिया जलार्थं गमनेन श्रमाधिक्यमेव, तद्वत्तीव्रवैराग्यमुमुक्षत्वयोरभावे मरुसलिलवत् शमादेस्तत्र भानमात्रता न शमादिफलं तस्य , नापीतरैः शान्त इत्यादिशब्दैर्व्यवहियते च इति भावः ॥३१॥
एवं सर्वेषां वेदान्तानामद्वितीयब्रह्मणि प्रत्यगभिन्ने नित्यशुद्धबुद्धमुक्तस्वभावे तात्पर्यनिर्णयानुकूलव्यापररूपश्रवणात्मक-ब्रह्मविचाराधिकारिणो विशेषणानि विवेकादीनि निरूप्य आत्मसाक्षात्कारसाक्षात्साधनं भक्तिं पूर्वोक्तविचारसाध्यामाह – मोक्षेति ।

मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी ।
स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते ॥३२॥

अन्वयः
(एतेषां) मोक्षकारणसामग्र्यां भक्तिःएव गरीयसी (तस्मात्) स्वस्वरूपानुसन्धानं (एव) भक्तिः इति अभिधीयते॥ ३२॥
भाष्यम् –
स्वस्वरूपानुसन्धानमिति निदिध्यासनमुच्यते । तस्यैव साक्षात्कारं प्रति साक्षात्साधनत्वात् । श्रुत्याचार्योपदेशेन ' स आत्मा तत्त्वमसि' (छां.उ.६.८.७-६,१६.१३) इति श्रुतःयोऽर्थः तव स्वरूपं ब्रह्म तदेव त्वमिति, तदनुसन्धानं तद्भावनाधारा विजातीय-प्रत्ययातिरस्कृतसजातीय प्रत्ययप्रवाहरूपा साक्षात्कारे असाधारणं कारणमिति भावः। शमदीनां विचारद्वारकनिदिध्यासनद्वारा- कारणत्वं ज्ञाने, अस्य तु साक्षादिति भावः। अत एव मोक्षस्य कारणं अभिव्यञ्जकं यज्ज्ञानं तत्सामग्र्यां तत्साधनसमुदायमध्ये भक्तिरेव गरीयसी साक्षात्कारणत्वादित्युक्तम् । सा च सामग्री विवेकादिनिध्यासनान्ता ॥३२॥

अपरेषां मतमाह ।

स्वात्मतत्त्वानुसन्धानं भक्तिरित्यपरे जगुः ॥३२१/२ ॥
अन्वयः
भक्तिः स्वात्मतत्त्वानुसन्धानं इति अपरे जगुः || ३२१/२||

भाष्यम् –
स्वात्मनः स्वस्य जीवस्य तत्वानुसन्धानम् । तस्य भावस्तत्त्वम् तत्पदवाच्यार्थत्वम् परमात्मत्त्वमित्यर्थः। तस्यानुसन्धानं, वास्तविकभेदसत्त्वेऽपि अभेदेनोपासनम् अहङ्ग्रहोपासनमिति यावत् । तत् भक्तिरिति अपरे जगुः इति भेदबुद्धिपुरस्सरायाः भ्रान्तिरूपाया अस्याः मुख्यभक्तित्वं नास्तीति सूचितम् ।।३२१/२॥

पूर्वोक्तसाधनसम्पन्नस्य कृत्यमाह उक्तेति-

उक्तसाधनसम्पन्नः तत्वजिज्ञासुरात्मनः
उपसीदेद् गुरुं प्राज्ञं यस्माद् बन्धविमोक्षणम्॥३३१/२॥

अन्वयः
(यः)उक्तसाधनसंपन्नः आत्मनः तत्वजिज्ञासुः यस्मात् बन्धविमोक्षणम् गुरुं प्राज्ञां उपसीदेत् || ३३||
भाष्यम् –
उक्तसाधनसम्पन्नः उक्तानि विचारसाधनत्वेन कथितानि यानि विवेकादीनि साधनानि तैः सम्पन्नः युक्तः , पुमानिति शेषः । आत्मनः स्वस्य तत्त्वं ज्ञातुमिच्छुः स्वयाथात्म्यज्ञानकामः उपसीदेत् शरणं गच्छेत्, कम् ? गुरुमुपदेशकम् । कीदृशम्? प्राज्ञं ,प्रकृष्टा निरतिशया ज्ञा अवगतिः प्रज्ञा ब्रह्मसाक्षात्कारः ।
ब्रह्मात्मनोः शोधितयोरेकभावावगाहिनी ।
निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते (श्लो.४२८)
इति वक्ष्यमाणत्वात् । सास्यास्तीति प्रज्ञः स एव प्राज्ञः , तं ब्रह्मनिष्ठमित्यर्थः । तेन स्वस्य फलमाह ।। यस्माद्यादृशगुरोः सकाशात् , बन्धविमोक्षणं बन्धस्य अज्ञानकल्पितस्य अहङ्कारादिदेहान्तस्य विमोक्षणं विशेषेणपरित्यागः इति । तादृशगुरूपसदने तदुपदेशजन्यस्वयाथात्म्यज्ञानेन बन्धनिवृत्तिरूपमोक्षः सिध्यति इति भावः ॥३३१/२॥

तादृशं गुरुं लक्षयति, श्रोत्रिय इत्यादिना –

श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्मविदुत्तमः ।
ब्रह्मण्युपरतः शान्तो निरिन्धन इवानलः ॥३४१/२ ॥

अन्वयः
यः श्रोत्रियः अवृजिनः अकामहतः ब्रह्मवित्तमः ब्रह्मणि उपरतः शान्तः निरिन्धनः इव अनलः॥३४॥
भाष्यम् –
'श्रोत्रियश्छन्दोऽधीते' (पा.सू.५.२.८५) इति पाणिनिनाऽनुशिष्टत्वात् अधीतोपनिषत्क इत्यर्थः ।उपनिषदमधीत्य कृततदर्थ-विचारस्यैव साक्षात्कारहेतुत्वात् । अवृजिनः निष्पाप इत्यर्थः ।
नाविरतो दुश्चरितात् नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥
(क.उ.२.२४) इति श्रुतेः । तत्र कारणमाह अकामहत इति । कामेन विषयाशया हतः कामहतः अभासितस्वस्वरूप इत्यर्थः । न कामहतः अकामहतः यस्तावत्स्वरूपं आनन्दं न जानाति स एव बहिरानन्दोऽस्तीति तं प्राप्तुं कदाचित्पापमपि कुर्यात् । अस्य तावत् ब्रह्मवित्तमस्य साक्षात्क्रियमाणस्वरूपानन्दत्वात्
विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्स्य परं दृष्ट्वा निवर्तते (२.५९)
इति गीतोक्तरीत्या निवृत्तरागत्वरूपाकामहतत्वं सिध्यत्येवेति निष्पापत्वं तस्मिन् । कामस्यैव पापहेतुत्वात् । तदुक्तम् गीतासु –
अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिछन्नपि वार्ष्णेय बलादिव नियोजितः ॥(३.३६)
इत्यर्जुनेन पृष्टो भगवानाह (भ.गी.३.३७)
काम एषक्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्धयेनमिह वैरिणम् इत्यादि ।

ब्रह्मण्युपरतः ब्रह्मणि विलीनमस्कः अत एव निरिन्धन अनल इव शान्तः , यथा इन्धनाभावे अग्निः शान्तः ज्वालाशून्यः भाति तथा अनालम्बित बाह्यवृत्तित्वात् शान्तः निर्गुणे ब्रह्मणि परिनिष्ठितचित्तत्वात् शान्तः निर्विकार इत्यर्थः । अत्र श्रोत्रियत्वादीनां विशेषणानां व्यावर्तकत्वं नास्ति, ब्रह्मवित्तमे अश्रोत्रियत्वस्य पापस्य कामहतत्वस्य च असम्भावितत्वात् , कन्तु वस्तुसत्तया तेषां तादृशगुरुज्ञापकत्वं ,सम्भवतीति स्वरूपलक्षणत्मेव मन्तव्यम् ।।३४ १/२॥

अहेतुकदयासिन्धुर्बन्धुरानमतां सताम् ॥३५॥

अन्वयः
(यः)अहेतुकदयासिन्धुःसतामं आनमतां बन्धुः ||३५॥
भाष्यम् –
न विद्यते हेतुर्यस्याः सा अहेतुकी तादृशी या दया परदुःखप्रहाणेच्छा तस्याः सिंधुः आश्रय इत्यर्थः । इतरस्य दयालोरपि दया अन्यत्र दुःखदर्शनेन स्वस्यापि जातदुःखत्वात् । तन्निरासार्थमहेतुकेति । अस्य तु ज्ञानमहिम्ना स्वतो वा परतो वा दुःखप्रसक्तेः केवलं जनास्तरन्तु संसारवार्धिमिति इच्छा परं व्युत्थानकाले इति भावः । बन्धुः दुःखहारक इत्यर्थः । केषाम् ? आनमतां सतां प्रह्वीभवतां सत्पुरुषाणामित्यनेन शिष्यस्य लक्षणं परिज्ञायैव ते उपदिशन्तीति सूचितम् । श्रूयते किल तत्र नासूयकायानृजवे शठाय, इदमशिष्याय नो देयम् इत्यादि । स्मर्यते च गीतायाम् (१८.३७)
इदं ते नातपस्काय नाभक्ताय कदाचन ।
नाचाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ।।
इदमपुसदनं समीपगमनं –

तमाराध्य गुरुं भक्त्या प्रह्वः प्रश्रयसेवनैः ।
प्रसन्नं तमनुप्राप्य पृच्छेद् ज्ञातव्यमात्मनः ॥३६॥
अन्वयः

तमं गुरुं भक्त्या आराध्य प्रह्व-प्रश्रय-सेवनैः प्रसन्नं तमं अनुप्राप्य आत्मनः ज्ञातव्यं पृच्छेत् ॥ ३६॥
भाष्यम् –
भक्तिः पूज्येष्वनुरागः मानसधर्मः , तया प्रह्वः तद्व्यंञ्जकाकारविशिष्टः नम्रकायः बद्धाञ्जलिपुटः, प्रश्रयसेवनैः प्रश्रयश्च सेवनानि च प्रश्रयसेवनानि तैरित्यर्थः । तत्र प्रश्रयः विनीतवाक्त्वं सेवनानि साष्टाङ्गनमस्कारतत्पादसंवहनतदुक्तकरणादीनि तैस्तमाराध्य संसेव्य ,ऋज्व्या तया सेवया प्रसन्न स्वाभिमुखं तं अनुप्राप्य यथासमयनिर्देशं तत्सन्निधौ यथाविधि स्थित्वा आत्मनः ज्ञातव्यं यज्जिज्ञासितं आत्मयाथात्म्यविषये तत्पृच्छेत् । भक्त्या प्रह्वः प्रश्रयसेवनैराराध्य इत्यनेन आराधयितुः मनसि वचसि काये च शुद्धत्वरूपत्रिकरणशुद्धिरुक्ता ॥ ३६॥
भक्तिपुरस्सरवाचिकाराधनप्रकारं दयया दर्शयति भगवान् जिज्ञासुभ्यः स्वामिन्नमस्ते इत्यादिना तथा वदन्तमित्यन्तम् –

स्वामिन्नमस्ते नतलोकबन्धो
कारुण्यसिन्धो पतितं भवाब्धौ ।
मामुद्धरात्मीयकटाक्षदृष्ट्या
ऋज्व्याऽतिकारुण्यसुधाभिवृष्ट्या ॥३७॥

अन्वयः
(हे) स्वामिन् नमस्ते नतलोकबन्धो कारुण्यसिन्धो भवाब्धौ पतितं मां उद्धरा (तव) आत्मीयकटाक्षदृष्ट्या ऋज्व्या अतिकारुण्यसुधाभिवृष्ट्या॥ ३७॥
भाष्यम् –
नतलोकबन्धो नतानां कृतनतीनां लोकानां जनानां बन्धुः दुःखमोचकः तस्य सम्बुद्धौ नतलोकबन्धो , स्वामिन् प्रभो, ते तुभ्यं नमः, प्रह्वीभावः अस्त्विति शेषः । यतस्त्वं नतलोक-दुःखमोचकः अतस्त्वां दुःखमुक्त्यै नमामीति भावः। तत्र हेतुमाह कारुण्यसिन्धो इति सम्बोधनेन । विवृतमेतत् अहेतुकदयासिन्धुरित्यत्र । स्वकीयं दुःखं निवेदयति भवाब्धौ पतितं , जन्मरारोगमरणानर्थसङ्कुले संसारसमुद्रे पतितमित्यर्थः। इदानीं तन्निवृत्तिं प्रार्थयते मामुद्धरेति । जन्मादिबन्धनिर्मुक्तं कुर्वित्यर्थः । तत्र साधनं याचते आत्मीयकटाक्षदृष्ट्येति । स्वकीयलोचनप्रान्तेनेत्यर्थः ।ब्रह्मसाक्षात्कारनिर्धूतसकलमलस्य भवतः पवित्रकटाक्षपाते सकलपापनिर्मुक्तोऽहं संसारसागरं तरामीति भावः।
उक्तं हि (सू.सं.२.२०.४४)
यस्यानुभवपर्यन्ता बुद्धिःसत्वे प्रवर्तते ।
तद्दृष्टिगोचरास्सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥ इति ।
एतेन शिष्येण गुरोस्साक्षात्पुरः न स्थेयमिति विनयप्रकारो दर्शितो भवति । किञ्च सम्पूर्णावलोकनं कटाक्षपात एव । अतस्तत्कामये इत्यपि भावः । नित्यशुद्धब्रह्मानन्दमग्नस्य मनसः चक्षुःप्रान्तद्वारा पूर्णतया मयि पाते सर्वथाऽपि पूतः दुःखविमुक्तो भवेयमहमिति भावः ।
यद्वा आत्मीयकटाक्षदृष्ट्या स्वकीयसानुग्रहवीक्षणेनेत्यर्थः । ऋज्व्या स्वभावसरलया, तद्विशेषणेन यथा लोके अगाधजलपतितः ऋज्वीं रज्जुं यष्टिं वा अवलम्ब्य उद्धृतो भवति तथाऽह भवत्कटाक्षं दीर्घदीर्घमवलम्ब्य संसाराब्धेरुद्धृतो भवामीति भावः व्यञ्जितः। सूर्यमण्डलाद्वा दीपाद्वा किरणाः पुञ्जीभूय रज्जुवद्यथा निष्क्रामन्ति तथा चक्षुषोऽपि तेजस्त्वात् निष्क्रान्ता रश्मयः एतस्मिन् सङ्क्रान्ताः

ब्रह्मनिष्ठमनस्संयुक्तत्वादेनमुद्धरन्तीति भावः । अतिकारुण्यसुधाभिवृष्ट्या अत्यन्तं कारुण्यं अतिकारुण्यं तदेव सुधा, सकलतापहारकत्वात् सुधेति रूप्यते। सुधा नामामृतं, तस्याः अभितो वृष्टिः यस्यां दृष्ट्यां सा अतिकारुण्यसुधाभिवृष्टिः तया अतिकारुण्यसुधाभिवृष्ट्या । अमृताभिवर्षणेन पुरुषः जरामरणादिवर्जितो भवतीति प्रसिद्धम् । युद्धे मृता वानरा इन्द्रकारितामृत-वर्षणेन उज्जीविता इति रामायणे प्रसिद्धम् । तादृशामृतस्यैव तथात्वे ब्रह्मनिष्ठानुकम्पामृतवर्षणदृष्टिः असङ्कुचितजरामरणादि-वर्जितत्वं दास्यतीति भावः ॥३७॥

स्वोद्धरणे विलम्बमसहिष्णुः स्वकीयतीव्रमुमुक्षुत्वं प्रकटीकरोति दुर्वारेति –

दुर्वारसंसारदवाग्नितप्तं
दोधूयमानं दुरदृष्टवातैः ।
भीतं प्रपन्नं परिपाहि मृत्योः
शरण्यमन्यं यदहं न जाने ॥३८॥

अन्वयः
यत् अन्यं शरण्यं अहं न जाने(तस्मात्) दुर्वारसंसारदवाग्नितप्तं दुरदृष्टवातैः दोधूयमानं मृत्योःभीतं प्रपन्नं(मां) परिपाहि ॥ ३८॥
भाष्यम् –
संसार एव दवाग्निः सर्वशो व्याप्य तापहेतुत्वात् वनानलः , सः भवदीयसदुपदेशजनितज्ञानं विना न वारयितुं शक्य इति दुर्वारः। वारयितुं स्वयमशक्य इत्यर्थः । दिर्वारश्चासौ संसारदवाग्निः तेन तप्तं दग्धं , वनानलस्य वातसहितत्वे बहुव्याप्य तापकत्वं प्रसिद्धम्। तथा दुरदृष्टवातैः दुरदृष्टानि पापानि तान्येव वाताः प्रतिकूलवायवः तैः दोधूयमानं मुहुर्मुहुः कम्प्यमानं, अनुकूलश्चेद्वातः एनमन्यत्र नयेत् , प्रतिकूलस्तु वातः, अग्नौ पातयति अग्निं वा अस्मिन् । एवं दवाग्नितप्तस्य अमृतवर्षणे तापमोक्षो भवतीत्यभिप्रायेण पूर्वं दृष्टेः अतिकारुण्यसुधाभिवृष्ट्येति विशेषणं दत्तम् । तत्र बहुव्रीहिमकृत्वा दृष्ट्या करणेन अतिकारुण्यसुधाभिवृष्ट्या सुधाभिवर्षणेन इत्यपि वक्तुं शक्यते । तेन दवाग्नितप्तं मां मृत्योः परिपाहीत्यन्वयः । इत्थं च स्वकीयकटाक्षदृष्ट्या ऋज्व्या मामुद्धरेति पूर्वमन्वयः । तया अपिकारुण्यसुधाभिवर्षणेन संसारदवाग्नितप्तं मां मृत्योः परिपाहीत्युत्तरत्रान्वयः । मृत्योर्भीतं , प्रपन्नं शरणागतं, मां मृत्योः परिपाहीत्युभयत्रान्वयः । भवदनुग्रहादात्मज्ञाने सति मम शरीरोत्क्रमणरूपमरणं न सम्भवतीति भावः । "नतस्य प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते" इति श्रुतेः । तथाच "धृवं जन्म मृतस्य च " इत्युक्तत्वात् मरणाभावे जन्माभावस्य सिद्धत्वात् जन्ममरण-प्रवाहरूपसंसारात् मुक्तो भवामि भवदनुग्रहे इति भावः ।स्वस्यानन्यशरणत्वं गुर्वाभिमुख्याय प्रकटयति शरण्यमन्यं यदहं न जाने इति । भवदन्यं मद्रक्षकं यत् यस्मात् अहं न जाने । अतोऽनन्यशरणोऽयं नोदासितव्य इति भावः । ॥३८॥
श्लोकद्वयेन भवादृशां अस्मासु करुणा निर्व्याजैवेत्याह शान्ता इति ।

शान्ता महान्तो निवसन्ति
सन्तो वसन्तवल्लोकहितं चरन्तः ।
तीर्णास्स्वयं भीमभवार्णवं
जनानहेतुना-न्यानपि तारयन्तः ॥३९॥

अयं स्वभावस्स्वत एव यत्पर-
श्रमापनोदप्रवणं महात्मनाम् ।
सुधांशुरेष स्वयमर्क-कर्कश-
प्रभाभितप्ता-मवति क्षितिं किल ॥४०॥

अन्वयः

शान्ताः महान्तःसन्तः निवसन्ति वसन्तवत् लोकहितं चरन्तः भीमभवार्णवं स्वयं तीर्णाः अहेतुना अन्यान् जनान् अपि तारयन्तः॥ ३९॥

अयं स्वभावः महात्मनाम् स्वत एव यत् परश्रमापनोदप्रवणं (यथा) अर्क-कर्कश-प्रभाभितप्त क्षितिं सुधांशुरेष स्वयं अवति किल॥ ४०॥

भाष्यम् –
वर्षासु वृष्टिबाधा , ग्रीष्मे तापः , शरदि प्रारम्भे सुखं , नमासद्वये कार्तिकान्तिम- भागस्य यमदंष्ट्रात्वकीर्तनात् , हेमन्त-शिशिरयो-श्शैत्यं, सुगन्धिकुसुमाकरः वसन्तर्तुः कात्स्न्र्येन लोकस्य सुखं जनयतीति वसन्तवदित्युक्तं तदा वर्ष-ताप-शैत्यरोगादीनामभावात् । स ऋतुः यथा सुखमेव जनयति तथा लोकस्य सुखमेव तन्वानाः शान्ताः निर्विकारमनस्काः अत एव महान्तः, अपरिच्छिन्नब्रह्म-साक्षात्कारवन्तः, अत एव

तादृशसद्ब्रमाभेदेन सन्तः " ब्रह्मवित् ब्रह्मैव भवतीति श्रुतेः, स्वयं भीमः भयंकरः यः भवार्णवः संसारसागरः तं तीर्णाः असंसारिण इत्यर्थः। स्वस्य आप्तकामत्वेन प्रयोजनाभावात् अहेतुना हेतुं विना,अन्यानपि तारयन्तः भवाम्भोधि-मग्नानिति भावः। हेतुं विना कथं तेषां तत्तारणे नहि स्वभावे कारणं गवेषणीयम् । नहि शर्करायां माधुर्यं किं निमित्तमिति प्रश्नो युज्यते तत्र तस्य स्वाभाविकत्वादित्यभिप्रायः।परश्रमापनोदप्रवणं परेषां यश्श्रमः दुःखं तस्यापनोदः निवारणं तत्र प्रवणं भावप्रधानो निर्देशः प्रवणभावः प्रवणता सक्तता वैयग्र्यमित्यर्थः। इति यत् अयं स्वभावः महात्मनां स्वत एव । परप्रेरणादिकं तत्र नापेक्ष्यत इत्यर्थः । तत्र दृष्टान्तमाह सुधांशुरित्यादिना । अर्क-कर्कश-प्रभाभितप्तां अर्कस्य सूर्यस्य या कर्कशा तीक्ष्णा प्रभा प्रकाशः तया अभितः तप्तां क्षितिं भूमिं, सुधांशुः अमृतकिरणश्चन्द्रः एषः प्रसिद्धः समीपवर्ती , स्वयं पराप्रेरितः अवति रक्षति, किलेति प्रसिद्धौ ॥४०॥

एवं विनीतवेषेण तदनुसारिण्या वाचा तदभिव्यंजितभक्त्याच आर्तः अनन्यशरणोऽयं सर्वथा रक्षणीय इत्यभिप्रायेण स्वाभिमुखं स्वात्मानं सानुग्रहानुकम्पामृत-वर्षिकटाक्षैः पावयन्तं देशिकोत्तमं स्वबन्धमोचकोपदेशाय धैर्येण प्रार्थयते। ब्रह्मानन्देत्यादिना ।

ब्रह्मानन्द-रसानुभूति-कलितैः पूतैः सुशीतैः सितैः
युष्मद्वाक्कलशोज्झितैः श्रुतिसुखैः वाक्यामृतैः सेचय ।
संतप्तं भवतापदावदहन-ज्वालाभिरेनं प्रभो
धन्यास्ते भवदीक्षण- क्षणगतेः पात्रीकृताः स्वीकृताः ॥४१॥

अन्वयः

हे प्रभो ब्रह्मानन्दरसानुभूतिकलितैः पूतैः सुशीतैःसितैःयुष्मद् वाक् कलश उज्झितैः श्रुतिसुखैःवाक्यामृतैःसेचय भवतापदावदहनज्वालाभिःसंतप्तं एनं भवदीक्षणक्षणगतेःपात्रीकृताः स्वीकृताःते धन्याः॥ ४१॥

भाष्यम् –

हे प्रभो सर्वशक्त, भवदीक्षणक्षणगतेः भवतां यदीक्षणं दयार्द्रविलोकनं , तस्य क्षणगतेः क्षणप्राप्तेः, पात्रीकृताः आस्पदीभूताः, यद्वा भवतां यदीक्षणं नयनं तस्य क्षणगतेः क्षणसंयोगस्य पात्रीकृताः आश्रयीभूताः क्षणमात्रं वा भवन्नेत्रपातलक्ष्या इति यावत् । अत एव स्वीकृताः आत्मीयत्वेन कृताः ये पुरुषाः ते धन्याः कृतार्थाः । तस्मादहमपि भवत्कटाक्षेण पातिततमाः पातिततमश्च धन्योऽस्मि । अतिक्षिप्रं सांसारिकाग्नि-तापं शिशमयिषुः एवं प्रार्थये इति सूचयति । "श्रेयसि केन तृप्यते" इति न्यायेन कटाक्षपात्रं मां स्वीकृतं भवताप-दावदहन-ज्वालाभिः भवस्य तापः भवतापः , संसारशोकः स एव दावदहनः वनाग्नि, तज्ज्वालाभिः संतप्तं अत्यन्तदग्धं, एनं परोवर्तिनं , मां ब्रह्मानन्द एव रस इव आस्वद्यत इति रसः, तदनुभूतिकलितैः तदनुभवमिश्रैः , अत एव पूतैः सकलकल्मष-हारकत्वेन पवित्रैः "न हि ज्ञानेन सदृशं पवित्रमिह विद्यत " इति स्मृतेः । तादृशज्ञानवत् वाक्यानां सकल –पापापहारक- ज्ञानोपदेश रूपत्वेन पूतत्वम् । सुशीतैः आन्तराणां आध्यात्मिकाधिदैविकाधिभौतिक तापानां नाशकत्वात् । सितैः रजस्तमो-मार्गनिवर्तनद्वारा सत्त्वमार्गैक-प्रापकत्वेन निर्मलैः । युष्मद्वाक्कलशोज्झितैः युष्माकं वाक् युष्मद्वाक् , वागिन्द्रियं तत्स्थानं मुखं वा स एव कलशः घटः ततो निर्गलन्ति वाक्यामृतानीति , तेन उज्झितैः विसृष्टैः, श्रुतिसुखैः कर्णानन्दायकैः, वाक्यामृतैः वाक्यान्येवामृतानि तैरित्यर्थः। सेचय मां सिचेत्यर्थः । स्वार्थे णिच् । पूतत्वं सुशीतत्वं सितत्वं कलशोज्झितत्वं वाक्येष्वमृते चाविशिष्टमिति वाक्यान्यमृतत्वेन रूपितानि । पूतत्वे हेतुः ब्रह्मानन्द-रसानुभूति- कलितैरिति, श्रुतिसुखैरिति श्रवणकालेऽपि आनन्दकरैरित्यनेन तदर्थमनुसंधाय यद्यनुभव उत्पद्येत तादात्विकः आनन्दः किमु वक्तव्य इति भावः ॥४१॥

पूर्वं भीतं प्रपन्नं इत्यत्रोक्तां भीतिं स्पष्टयति सहसा स्वस्मिन्ननुग्रहसिध्यर्थम् । कथमित्यादिना ।

कथं तरेयं भवसिन्धुमेतं का
वा गतिर्मे कतमोस्त्युपायः ।
जाने न किंचित्कृपयाव मां
प्रभो संसारदुःख-क्षतिमातनुष्व ॥४२॥

अन्वयः

एतं भवसिन्धुं (अहं)कथं तरेयं ?मे का वा गतिः? कतमः अस्ति उपायः?(अहं)किञ्चित् न जाने, कृपयाः मां अव,हे प्रभो संसारदुःखक्षतिं आतनुष्व॥ ४२॥

भाष्यम् –

एतं बहुविध-दुर्वार-दुःखजालजटिलं भवसिंधुं कथं तरेयम् । एवमेव यदि वर्तेय मे कावा गतिः ? मया किं तावत्प्राप्यम् ? सर्वथा दुःखमेवेति भावः। अतः कतमोस्त्युपायः एतद्भवसिन्धु-तरणे कोवोपायोऽस्ति? अहं तावत् किंचिदपि न जाने । मामव एवं भीतं परिपाहि ।अवनं स्पष्टम् प्रार्थयते संसारदुःख-क्षतिमातनुष्वेति । सांसारिक-शोकं समूलघातं जहीत्यर्थः ॥४२॥

इदानीं गुरोः कर्तव्यमुपदिशति, तथेत्यादिना, श्लोकद्वयेन ।

तथावदन्तं शरणागतं स्वं संसारदावानल-तापतप्तम् ।
निरीक्ष्य कारुण्यरसार्द्र-दृष्ट्या दद्यादभीतिं सहसा महात्मा ॥४३॥
विद्वान्स तस्मा उपसत्तिमीयुषे मुमुक्षवे साधु यथोक्तकारिणे ।
प्रशान्तचित्ताय शमान्विताय तत्त्वोपदेशं कृपयैव कुर्यात् ॥४४॥

अन्वयः

तथा वदन्तं संसारदावानलतापतप्तम् स्वं शरणागतं कारुण्यरसार्द्रदृष्ट्या निरीक्ष्य महात्मा(गुरुः)सहसा अभीतिं दद्यात् ॥ ४३॥
स विद्वान् उपसत्तिं ईयुषे मुमुक्षवे साधु यथोक्तकारिणे तस्मा प्रशान्तचित्ताय शमान्विताय तत्त्वोपदेशं कृपया कुर्यात् एव ॥ ४४॥

भाष्यम् –
तथावदन्तमित्युक्त्या वाग्व्यापारेण तदीयाधिकारस्य आन्तरस्य सम्यज्ज्ञातुं शक्यत्वात् अधिकारिणं ज्ञात्वैव अभयदानोपदेशादिकं गुरुभिः कर्तव्यमिति द्योतितम् । संसारदावानल-तापतप्तं, स्वं स्वात्मानं शरणागतं रक्षकत्वेन मत्वा प्राप्तं, कारुण्यरसार्द्रदृष्ट्या निरीक्ष्य, महात्मा अक्षुद्रबुद्धिः, गुरुः सहसाऽभीतिं दद्यादित्यनेन भीताः सहसा भीत्या मोचनीया इति व्यञ्जितम् । अभयदानेन निवृत्तभीतेरेव पुरुषस्य उपदिष्टार्थग्रहणादौ सामर्थ्यं सम्भवतीति भावः । भीतस्य भयं शक्तेन बहुकालं न स्थापनीयं इति च सहसेत्युक्तम् । भीतस्याभयदानं प्रथमतः कर्तव्यमित्युक्त्वा अधिकारानुसारेण उपदेशः अनन्तरकालिक इति बोधयति विद्वानित्यादिना ।
स विद्वान् ब्रह्मवित्तमो देशिकः , उपसत्तिमीयुषे विधिवत्समीपं गताय मुमुक्षवे मोक्षं कामयमानाय, साधुयथोक्तकारिणे सम्यग्विहितानुष्ठात्रे । एतेन शिष्टत्वमुक्तम् । "नाविरतो दुश्चरितात् नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् " इत्युक्तत्वात् । श्रोत्रियत्वं अवृजिनत्वं मोक्षकामव्यतिरिक्त- कामशून्यत्वं च शिष्ये अवेक्षणीयमिति भावः। प्रशान्तचित्ताय देहादिब्रह्मपर्यन्तभोग्यवस्तुनो विरज्य , स्वलक्ष्ये नियतावस्थितमनस्काय, शमान्विताय निगृहीत-बहिरिन्द्रियाय, एतेन शमादिषट्कमुक्तम् । अधिकारिविशेषणम् । तस्मै वैराग्यादि गुणगणमण्डिताय, तत्त्वोपदेशं कृपया तदीयदुःखप्रहाणेच्छया आप्तकामस्य स्पृहान्तराभावात् कुर्यादेवेत्येवकारो भिन्नक्रमः । अधिकारिणि लब्धे नोदासितव्यम् , पात्रे दत्ता ब्रह्मविद्या लोकानुग्रहार्थं प्रतिष्ठिताभवतीति भावः । इत्थं च सर्वानर्थ-हेतुभूताविद्यानिवर्तक-ब्रह्मविद्यापारंपर्या-विच्छेदः स्वशिष्यमोचनं च उपदेशस्य फलम् । तत्र गुरुशिष्यसंवादरूपेण प्रकरणप्रणयनं सुलभतया तत्त्वस्य श्रोतृबुद्ध्यारोहाय ।अत एव किलाख्या-त्याख्यायिकां तत्र तत्र श्रुतिरपि । तेन गुरुलक्षणं शिष्यलक्षणं प्रष्टव्याद्यंशाः सर्वे अनायासेन अस्माभिः ज्ञातुं शक्यन्ते इति ॥४४॥

परमकारुणिको गुरु: शिष्येण "कथं तरेयं भवसिन्धुमेतं " इत्यादिना दर्शितां भीतिं झटिति निनाशयिषुराह । माभैष्टेति ।

माभैष्ट विद्वंस्तव नास्त्यपायः संसारसिंधोस्तरणेस्त्युपायः ।
येनैव याता यतयोस्य पारं तमेव मार्गं तव निर्दिशामि॥४५॥

अन्वयः
(हे)विद्वान् माभैष्ट तव अपायःनास्ति संसारसिन्धोः तरणे अस्ति उपायःयतयः अस्य पारं येनैव याता तमेव मार्गं तव निर्दिशामि॥ ४५॥
भाष्यम् –
हे विद्वन् भवान् माभैष्ट , भवतो भयं माभूदिति सहसा अभीतिर्दत्ता ।विद्वन्निति सम्बोधयन् विवेकादिकं संपाद्य गुरुकरुणां विना दुःखतरणं न भवतीति मां प्राप्तस्त्वं ज्ञातव्यं जानीष एव इति सूचयति , तादृशस्य तव साधुयथोक्त-कारिणः नास्त्यपायः "नहि कल्याणकृत्कश्चित् दुर्गतिंतात गच्छति " इति स्मृतेः । अतः कथं तरेयम् ,कावा गतिरिति मैव भैषीरित्यर्थः । एवं मा भैष्ट तव कल्याणकर्तुः अपायो नास्तीति तमाश्वास्य कतमोऽस्त्युपायः इत्यस्य उत्तरमाह संसारसिंधोस्तरणेऽस्त्युपाय इति । तत्र सम्यग्विश्वासोत्पत्यर्थं तमुपायं सप्रमाणं कथयति । येनैव मार्गेण अस्य संसारसिन्धोः पारं अन्तं यतयः प्रयत्नशीलाः संन्यासिनः , याताः तमेव मार्गं तव निर्दिशामि उपदिशामीत्यर्थः ॥४५॥
तादृशमार्ग-शुश्रूषायामौत्कट्य-सिध्यर्थं पुनरपि सामान्यरूपेणैव उपायं निर्दिशति ।अस्तीति।

अस्त्युपायो महान्कश्चित् संसारभयनाशनः ।
तेन तीर्त्वा भवाम्भोधिं परमानन्दमाप्स्यसि ॥४६॥
अन्वयः
संसारभयनाशनःमहान् कश्चित् अस्ति उपायः तेन भवाम्भोधिं तीर्त्वा परमानन्दं आप्स्यसि ॥ ४६॥

भाष्यम् –
संसारभयनाशनः महान् बह्वायास-साध्यसाधनसाध्यः कश्चिदुपायोऽस्ति, तेन वक्ष्यमाणोपायेन भवाम्भोधिं दुस्तरं संसारसागरं तीर्त्वा

तन्मूलभूतां अविद्यां भंक्त्वा परमानन्दं निरवधिकं शाश्वतं संतोषं, आप्स्यसि लप्स्यसे इत्यर्थः । तेन दुःखनिवृत्तिरेव त्वया काम्यते मयोपदेक्ष्यमाणोपायेन तु दुःखनिवृत्तिरेव त्वया काम्यते मयोपदेक्ष्यमाणोपायेन तु दुःखमप्यत्यतं निवर्तते, नित्यनिरतिशयानन्दाविर्भावश्च तव भवतीति शिष्यः अत्यन्तमाप्यायित इति भावः ॥४६॥
तमुपायं विशेषतो निर्दिशति । वेदान्तेति ।

वेदान्तार्थ-विचारेण जायते ज्ञानमुत्तमम् ।
तेनात्यन्तिक-संसारदुःखनाशो भवत्यनु ॥४७॥
अन्वयः
वेदान्तार्थ-विचारेण उत्तमम् ज्ञानं जायते तेन आत्यन्तिक-संसारदुःखनाशःअनु भवति ॥ ४७॥
भाष्यम् –
वेदानामन्ताः वेदान्ताः उपनिषदः तासां योऽर्थः तद्विचारेण, उपक्रमोपसंहारादि-षडिवध-तात्पर्यलिङ्गैः प्रतिपाद्यमानः सजातीय-स्वगतभेदरहितः नित्यशुद्ध-बुद्धमुक्त-स्वभावः परमात्मा तस्य विचारेण तन्निर्णयानुकूलमानस-व्यापारेण , उत्तमं ज्ञानं संशयभावनाद्यशबलितं ज्ञानं निर्णयः जायते । तेन निर्णयेन आत्यंतिक-संसारदुःखनाशः स्वसमानाधिकरण-
दुःखप्रागभावासमानकालिकः दुःखनाशः, अनु तन्निर्णयानुपदं भवति भविष्यतीत्यर्थः ॥४७॥

इदानीं तादृशनिर्णया-साधारण-हेतूनाह । श्रद्धेत्यादिना ।

श्रद्धाभक्ति-ध्यानयोगान् मुमुक्षोः
मुक्तेर्हेतून् वक्ति साक्षात् श्रुतेर्गीः ।
यो वा एतेष्वेव तिष्ठत्यमुष्य
मोक्षोऽविद्याकल्पिताद्देहबन्धात् ॥४८॥
अन्वयः
मुमुक्षोः मुक्तेः हेतून् श्रुतेर्गीः श्रद्धाभक्ति-ध्यानयोगान् साक्षात् वक्ति एतेष्वेव तिष्ठति अमुष्य (तस्य)अविद्याकल्पितात् द्देहबन्धात् मोक्षः यो वा ॥ ४८॥
भाष्यम् –
तत्र श्रद्धा-गुरुवेदान्त-वाक्यविश्वासः शास्त्रस्य गुरुवाक्यस्येत्यादिना लक्षिता ।भक्तिः स्वस्वरूपानुसन्धानं निदिध्यासनम् । ध्यानं, "तत्र प्रत्ययैकतानता ध्यानं " इति सूत्रितं " सम्यगास्थापनं बुद्धेः शुद्धेः ब्रह्मणि सर्वदेति " लक्षितं समाधानम् ।
योगः " योगाश्चित्तवृत्तिनिरोधः " इति सूत्रितः । तत्र श्रद्धा सर्वत्र हेतुः । भक्तिध्यानयोगानां मध्ये उत्तरोत्तरस्य पूर्वपूर्वहेतुत्वम् । चित्तवृत्तिनिरोधे समाधानस्य तस्मिन् श्रुताचार्योपदेशमनुस्वस्वरूपानुसन्धानरूपनिदिध्यासनस्य सम्भवात् । यद्वा ध्यै चिन्तायामिति धातोः युक्तिभिरनुचिन्तनरूपं मननं निदिध्यासन-साक्षात्कारणमुच्यते ध्यानशब्देन, ज्ञानप्रतिबन्धक-सकलदुरित-निवर्तकं सगुणध्यानं वा । अत्रोभयत्रापि चित्तबाह्यवृत्ति-निरोधरूप-योगस्य हेतुत्वं अस्त्येव । यद्वा युज्यते सम्बध्यते आत्मसाक्षात्कारेणानेनेति योगः, भक्तिश्चासौ योगः,ध्यानं च तद्योगः इति भक्तियोगः ध्यानयोगः इति वा सम्बन्धः । मुमुक्षोः पुरुषस्य मुक्तेः बन्धनिवृत्तेः, हेतून् श्रुतेर्गीः " श्रद्धाभक्ति-ध्यान-योगादवेहि " इति कैवल्योपनिषत् , साक्षाद्वक्ति प्रत्यक्षश्रुतिरित्यर्थः ।यद्वा मुक्तेः मुक्तिहेतुज्ञानस्य साक्षाद्धेतून् साक्षात्कारणानीति अवेहीति पदघटिता श्रुतिः वक्ति इति वा अन्वयः। यो वै पुरुषः एतेष्वेव श्रद्धाभक्ति-ध्यानयोगेषु तिष्ठति, श्रद्धालुः भक्तिमान् ध्याता योगी च सदा भवति, अमुष्य
अदश्शब्दप्रयोगेण तादृशाधिकारिणः दुर्लभत्वं सूचयति अदसस्तु विप्रकृष्टमित्युक्तेः। तस्य अविद्याकल्पितात् अज्ञानमूलकात् देहबन्धात् अहङ्कारादिदेहबन्धात् ,मोक्षः निवृत्तिः सिध्यत्येवेति शेषः। योवा इत्यत्र वै इत्यवधारणे, स अन्ते सम्बन्धनीयः । एतेष्वेवेत्यत्र अवधारणं उक्तसाधनान्य-निष्ठत्वं वारयति ॥४८॥

इदानीं गुरुः सङ्ग्रहेण शिष्यं प्रति संसृतिहेतुं तन्निदानं तन्निवृत्त्युपायं च सकारणमुपदिशति । अज्ञानयोगादिति ।

अज्ञानयोगात्परमात्मनस्तव
ह्यनात्मबन्धस्तत एव संसृतिः ।
तयोर्विवेकोदित-बोधवह्निः
अज्ञानकार्यं प्रदहेत्समूलम् ॥४९॥

अन्वयः
परमात्मनः तव अज्ञानयोगात् अनात्मबन्धः हि तत एव संसृतिः तयोःविवेकोदित-बोधवह्निः समूलम् अज्ञानकार्यं प्रदहेत् ॥४९॥

भाष्यम् –

परत्मात्मनस्तव अज्ञानयोगात् अनाद्यविद्यासम्बन्धात् , अनात्मबन्धः अनात्मसु स्थूलसूक्ष्म-कारणशरीरेष्वात्मत्वबुद्धिः । तत एव जन्मजरामरणसुखदुःखजडत्वादि धर्माध्यासरूपा संसृतिः । तयोः आत्मानात्मनोः विवोकोदितबोधवह्निः विवेकः भेदज्ञानं तेन उदितो जातः बोधवह्निः साक्षात्काररूपाग्निः समूलम् अज्ञानरूपबीजोपेतम् अज्ञानकार्यम् अहंकारादिदेहान्तबन्धं तत्प्रयोज्य-जन्मजरामरणादिरूप-संसारं च प्रदहेत् प्रकर्षेण भस्मीकुर्यादित्यर्थः । तथाच संसृतिकारणम् अनात्मबन्धः , तत्र कारणं तवाज्ञानयोगः , तन्निवृत्त्युपायः परमात्मबोधः तत्र कारणम् आत्मानात्मा-विवेकः इति सङ्ग्रहेणोक्तम् । तेन वेदान्तविचारजन्योत्तमज्ञानस्य संसारदुःखनाशकत्वविषये उपपत्तिः प्रदर्शिता आज्ञानिकस्य बन्धस्य ज्ञानादेव निवृत्तिः नान्यत इति ॥४९॥

इत्थं गुरुमुखारविन्दनिर्गलितवाक्सुधास्यन्दानन्दितः शिष्यः तन्मुखकलशनिरर्गलनिर्गलद्वाक्यपीयूषपारावारे गाढं मिमङ्क्षुः स्वकीयसकलसन्देहभञ्जनाय तं प्रष्टुं विनयेन प्रार्थयते ।

शिष्य उवाच -

कृपया श्रूयतां स्वामिन् प्रश्नोऽयं क्रियते मया ।<br>
यदुत्तरमहं श्रुत्वा कृतार्थः स्यां भवन्मुखात् ॥५०॥

अन्वयः

स्वामिन् कृपया श्रूयतां अयं प्रश्नः क्रियते भवन्मुखात् यदुत्तरं अहं श्रुत्वा मया कृतार्थः स्यां ॥५०॥

भाष्यम् –

एतेन गुरुसन्निधावनिवेद्य प्रश्नो न कर्तव्य इति शिष्यधर्मो बोधितः । यस्य उत्तरं यदुत्तरम् । तत्र प्रश्नोऽयं क्रियते मयेति अनुक्त्वा, प्रथमं कृपया श्रूयतामिति प्रार्थनोत्तरं तदुक्त्या गुरोः स्वस्मिन् दयाभिवृद्धये मानसमार्दवं क्षिप्रजिज्ञासुत्वं च सूचितम् । भवन्मुखात् श्रुत्वेत्यनेन स्वस्य अनन्यशरणत्वं गमितम् ॥५०॥

दार्थाभावना तुर्यगाच "ब्रह्मात्मना संस्थितिः मुक्तिः " इत्यत्रसंस्थितिशब्देन वासनाक्षय-मनोनाश-सहकृतस्वनुभवबोधकेन व्यञ्जिताः । तेन सालोक्य-सामीप्य-सारूप्य-सायुज्यानां मुख्यमुक्तित्वाभावश्च सूचितो भवति । सगुणविषयकतया तेषां चतुर्णामपि मिथ्यात्वात् , परिच्छेदत्रयशून्यत्वरूपब्रह्मत्वस्य सगुणेऽसम्भवात् । ब्रह्मात्मना संस्थितिः कल्पितसकलविधोपाधिसम्बन्धविधुरनित्यशुद्धबुद्धमुक्तप्रत्यगभिन्नपरिपूर्णस्वरूपेणावस्थानं कैवल्यमेव मुक्तिः, शतकोटिजन्मसु कृतैः पुण्यैर्विना नो लभ्यते इत्यन्वयः॥२॥

दुर्लभं त्रयमेवैतद् देवानुग्रहहेतुकम् ।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥३॥
अन्वयः
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः(इति) एतत् दैवानुग्रहहेतुकम् त्रयम् दुर्लभमेव (अस्ति)||३||

लब्ध्वा कथंचित् नरजन्म दुर्लभम्
तत्रापि पुंस्त्वं श्रुतिपार-दर्शनम्।
यस्स्वात्ममुक्तयै न यतेत मूढधीः
स आत्महा स्वं विनिहन्त्यसद्ग्रहात् ॥४॥

अन्वयः
कथंचित् दुर्लभं नरजन्म लब्ध्वा तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् यः मूढधीः न यतेत स्वात्ममुक्त्यै स स्वं आत्महा विनिहन्त्यसद्ग्रहात्||४||

इतः कोन्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ।
दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥५॥
अन्वयः
इतः कोन्वस्ति मूढात्मा यः दर्लभं मानुषं देह प्राप्य तत्रापि पौरुषम् तु स्वार्थे प्रमाद्यति ||५||

पठन्तु शास्त्राणि यजन्तु देवान्
कुर्वन्तु कर्माणि भजन्तु देवताः ।
आत्मैक्यबोधेन विना विमुक्तिः
न सिध्यति ब्रह्मशतान्तरेऽपि ॥६॥
अन्वयः
पठन्तु शास्त्राणि यजन्तु देवान् कुर्वन्तु कर्माणि भजन्तु देवताः विना आत्मैक्यबोधेन विमुक्तिः ब्रह्मशतान्तरेपि न सिध्यति ||६||

अमृतत्वस्य नाशास्ति वित्तेनेत्येव हि श्रुतिः ।
ब्रवीति कर्मणो मुक्तेःअहेतुत्वं स्फुटं यतः ॥७॥
अन्वयः
मुक्तेः अहेतुत्वं कर्मणो स्फुटं यतः श्रुतिः ब्रवीति हि न आशास्ति अमृतत्वस्य वित्तेनेत्येव ||७||

भाष्यम्

यतो बहुजन्मार्जितसुकृतविशेषप्राप्यं मानुषपौरुषादिकम्,यतश्च स्वार्थेऽप्रमत्तेन पुरुषेण भवितव्यम्, यतश्चात्यन्तिकदुःखनिवृत्ति-निरतिशयसुखरूपमोक्षः आत्मैक्यबोधेन विना कर्मकाण्डाध्ययनतदनुष्ठानादिरूप-कर्मकलापेन साक्षान्नाविर्भवति,यतश्च श्रुतिरेव साक्षादिममर्थं,"अमृतत्वस्य नाशास्ति वित्तेन "(बृ.उ.२.४.२)इति वित्तसाध्यकर्मणः साक्षान्मोक्षोपयोगित्वं प्रत्यक्षेप्सीत् अतः विमुक्त्यै प्रयतेत विद्वानिति -

अतो विमुक्त्यै प्रयतेत विद्वान्
संन्यस्तबाह्यार्थ-सुखस्पृहः सन् ।
सन्तं महान्तं समुपेत्य देशिकं
तेनोपदिष्टार्थसमाहितात्मा ॥८॥
अन्वयः
अतः विद्वान् प्रयतेत विमुक्त्यै संन्यस्तबाह्यार्थसुखस्पृरः सन् समुपेत्य सन्तं महान्तं देशिकं तेनोपदिष्टार्थसमीहितात्मा ||८||

भाष्यम् –
विद्वानिति नित्या नित्यविवेकी कथितः।
ये हिसंस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः॥ (गी. ५.२२)
इति गीतासु बुधशब्देनार्थस्यास्य सूचितत्वात् । वैषयिकसुखस्य अनित्यत्वं द्योतयति बाह्यार्थेति । अर्थानां बाह्यत्वेनगन्तुकतया सार्वदिकत्वाभावात्तत्प्रयोज्यसुखाविर्भावस्यापि तादृशत्वमिति । अतो विवेकिना पुरुषधौरेयेण तत्र स्पृहात्यक्तव्येति प्रयत्नप्रकारं प्रथममाह संन्यस्तबाह्यार्थसुखस्पृहः सन्निति।
बाह्याश्च ते अर्थाश्च बाह्यार्थाः।तैः सुखं बाह्यार्थसुखम् ।तस्मिन् स्पृहा, बाह्यार्थसुखस्पृहा संन्यस्ता येन इति ऎहिकामुष्मिक-फलभोगविरागः कथितः ।तेन श्रुतिस्मृत्युक्तकर्मणां निष्कामानुष्ठानेन नितान्तनिर्मलीकृतस्वान्तत्वमुक्तप्रायम् । अविवेकिनः विषयलम्पटस्य अस्तित्वमपि दुर्लभमिति सूचयिति– सन्निति।"आचार्यवान्पुरुषो वेद " (छां.उ.६.१४.२) "आचार्याद्धैव विद्या विदिता साधिसष्ठं प्रापत्" (छां. उ.४.९.३)इति श्रुतेः अतीन्द्रियस्य आत्मैक्यस्य गुरुं विनाऽधिगन्तुमशक्यत्वात् पूर्वोक्तरीत्या महापुरुषसंश्रयः कर्तव्य इत्याह– सन्तम् इत्यादिना। अस्तीति सन् तमित्यर्थः। "अस्ति ब्रह्मेति चेद्वेद , सन्तमेनं ततो विदुः"(तै.उ.२.६)"सदेव सौम्येदमग्र आसीत्"(छा.उ.६.२.१) " यो वै भूमा तदमृतम् (छां.उ.७.२४.१)"अतोऽन्यदार्तम्"(बृ.उ.३.४.२) "सत्यं ज्ञानमनन्तं ब्रह्म "(तै.उ.२.१)
नासतो विद्यते भावः नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदर्शिभिः॥ (भ.गी.२.१६)
इत्यादि श्रुतिस्मृतिभ्यः कालत्रयाबाध्यत्वरूपास्तित्वस्य ब्रह्मण्येव सत्वात् । देशिकस्य तथात्वं " ब्रह्मविद्ब्रह्मैव भवति " (मु.उ.) इति श्रुत्या तदभिन्नत्वात् । तेन असद्भ्योऽनात्मभ्यः सुतरां निवृत्ताभिमानत्वरूपा ब्रह्मनिष्ठा सूचिता भवति । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" (मु.उ.१.२.१२), "अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान्ह्यतर्क्य-मणुप्रमाणात् "(क.उ.२.८)इत्यादिश्रुतिभ्यः तादृशादेव गुरोः संशयभावनादिविरहितशुद्धात्मबोधस्य सम्भवात् ।
युक्तं ह्येतत् –लोकेऽप्यस्माभिरदृष्टो मार्गः दृष्टतन्मार्गैः किल बोधनीयः।स्वयमेव कथञ्चिल्लब्धोऽपि संशयः दृष्टतत्वैः किल निरसनीयो भवति ।

तत्र शुकजनकसंवादः प्रमाणम् ।जन्मान्तरकृतसुकृतपरिपाकवशात् स्वयं ज्ञातज्ञेयोऽपि पित्रा*नुशिष्टोऽपि महानुभविनो जनकस्य वैदेहस्य वचनात्किल ब्रह्मणि विश्रान्तमानसोऽभूच्छुक इति हि वासिष्ठादौ स्मर्यते । तथाच सद्रूपब्रह्माभिन्नत्वात् सद्रूपत्वं देशिकस्य । अत एव महत्वम् । विवेचितकोशपञ्चकत्वात् अपरिच्छिन्नत्वम्।

यद्वा - शास्त्रोक्त समस्तसद्गुणमण्डितत्वम् ।वक्ष्यते हि–

श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्मविदुत्तमः ।
अहेतुकदयासिंधुः बन्धुरानमतां सताम् ॥
ब्रह्मण्युपरतश्शन्तो निरिन्धन इवानलः । (श्लो.३४-३५)

इत्यादिगुणजातम् ।

शिष्येभ्यो ज्ञानं दिशतीति देशिकः , तं समुपेत्य-यथाविधि उपसद्य तेन गुरुणा उपदिष्टोयोऽर्थः ब्रह्मरूपः तत्प्राप्तिप्रकाररूपश्च , तत्रैव सम्यगाहितः आत्मा अन्तःकरणं येन तादृशः सन् । विमुक्त्यैप्रयतेतेत्यनेनमुक्तीच्छां विना तत्र प्रयत्नासम्भवात् मुमुक्षुत्वं ध्वनितम् । उपदिष्टार्थसमाहितात्मा इत्यनेन सततं ब्रह्मसमाहितमानसत्वस्य सर्वकर्मसंन्यासं विनाऽसंभवाद्विवेकिना विरक्तेन स्वरूपतः सकलकर्मसंन्यासपुरस्सरं ब्रह्मनिष्ठं गुरुमुपसद्य सर्वदा ब्रह्मविचारः कर्तव्य इत्युक्तं भवति॥८॥

सङ्ग्रहेणोक्तमर्थं सप्तभिः श्लोकैर्विवृणोति । तत्र मुक्त्यर्थं क्रियमाणप्रयत्नस्य सम्यग्दर्शननिष्ठान्तत्वात्, मोक्षसाक्षात्साधनं सम्यग्नदर्शननिष्ठां तत्र मुख्यहेतुं परवैराग्यापरपर्यायं योगारूढत्वं चाह अनेन श्लोकेन–

उद्धरेदात्मनात्मानं मग्नं संसारवारिधौ ।
योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया ॥९॥

अन्वयः

योगारूढत्वमासाद्य सम्यग्दर्शननिष्टया संसारवारिधौ मग्नं आत्मानम् आत्मना उद्धरेत् ||९||

भाष्यम् –

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
सर्वसङ्कल्पसंन्यासीयोगारूढस्तदोच्यते॥(भ.गी.६.४)

इति भगवद्वचनात् ।

परवैराग्यपुरस्सरसम्यग्दर्शननिष्ठैव संसाराब्धिपतितात्मोद्धरणे हेतुःइति भावः।

क्लेशादिपञ्चकतरङ्गयुतं भ्रमाढ्यं
दारात्मजाप्तधनबन्धुझषाभियुक्तम्।
और्वानलाभनिजरोषमनङ्गजालं
संसारसागरमतीत्य हरिं व्रजामि॥
संसारसागरविशालकरालकाल-
नक्रग्रहग्रसननिग्रहविग्रहस्य।
व्यग्रस्य रागनिचयोर्मिनिपीडितस्य
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥

इत्यादिरीत्या अविद्यातद्विलासरूपस्य संसारस्य सम्यग्ज्ञानं विना दुस्तरत्वाद् वारिधित्वेन रूपणम्।नह्यनात्मानं देहमात्मत्वेन मन्वानस्य तस्मिन् जायमाने म्रियामाणे वा तद्गतधर्मःस्वस्मिन्नास्तीति विज्ञातुं शक्यं, क्षुत्पिपासायुते वा प्राणे, सुखिनि दुःखिनि वाऽन्तःकरणे। एवमविद्यास्मितारागद्वेषाभिनिवेशानां सन्ततत्वात् क्लेशादिपञ्चकस्य तरङ्गतया रूपणम् ।भ्रम एव भ्रमः अतस्मिंस्तद्बुद्धिरेव आवर्तः इत्यादि स्पष्टम्।अनाद्यविद्यावशात् अज्ञःकर्ता मनुष्योऽहम्इत्यादिरीत्या स्थूलसूक्ष्मकारणशरीरेषु अनात्मसु अहमिति स्वरूपाप्राप्त्या स्थितिरेव संसारवारिधिमग्नत्वमसङ्गसच्चिदानन्दरूपस्यात्मनः।तत्रापि सुषुप्तौ संसाराननुभवात् अविवेकिमनोरूपोपाधिमूलकत्वमेव वक्तव्यं संसारस्य। श्रूयते हि–

मन एव मनुष्याणां कारणं बंधमोक्षयोः।
बन्धाय विषयासक्तं मुक्त्यैनिर्विषयं स्मृतम्॥इति । (ब्र.बिं.२)

अतः विवेचनशून्यस्य मनसःशरीरादिसंसक्तत्वं आत्मनः संसारवारिधिमग्नत्वम्।

अतःश्रवणमननादिशास्त्रीयसंस्कारसंस्कृतं मनो यदा भवति तदा भ्रमशून्यं आत्मयाथात्म्यज्ञानावाप्त्या भवतीति,अविवेकि मनः शास्त्रजन्यविवेकवता मनसा उद्धरेत् अनात्मभ्योऽपनयेत्।तथाच तस्मिन् पराङ्मुखत्वस्वाभाव्यात् बाह्येषु शरीरादिषु सक्ते वस्तुतोऽसङ्गस्यापि लोहितस्फटिकवत् संसक्तस्येव भासमानस्य आत्मनः उपाधेरनात्मसम्बन्धाभावे प्रत्यङ्मुखतयाऽऽत्ममात्रसंस्थत्वे च आत्मा उद्धृत इव भवतीति भावः।

संसारवारिधौमग्नमात्मानं योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया आत्मना उद्धरेदित्यन्वयः ॥९॥

योगारूढत्वं विशदयन्नेव श्रवणमनननिदिध्यासनानि संन्यासोत्तरकालिकानि सम्यग्दर्शननिष्ठावाप्तिसाधनानि तावदाह संन्यस्येत्यादिना–

संयस्य सर्वकर्माणि भवबन्धविमुक्तये ।
यत्यतां पण्डितैर्धीरैः आत्माभ्यास उपस्थितैः ॥१०॥
अन्वयः
पण्डितैः धीरैः उपस्थितैः सर्वकर्माणि संन्यस्य भवबन्धविमुक्तये आत्माभ्यास यत्यतां ||१०||
भाष्यम् –
सर्वकर्माणि संन्यस्य कर्मकाण्डोक्तानि स्वरूपतोपि परित्यज्यभवबन्धविमुक्तये सांसारिकबन्धनिवृत्तिहेतुभूतसम्यग्दर्शननिष्ठायै, पण्डितैः आत्मविषयकपरोक्षज्ञानवद्भिः,धीरैः वशीकृतबुद्धिभिः–
पराञ्चिखानि व्यतृणत् स्वयम्भूः
तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षत्
आवृत्तचक्षुरमृतत्वमिच्छन् (क.उ.४.१)
इति श्रुतेः। धियं रातीति धीरः , प्रधानभूतां कार्यकारणसंघातमध्ये बुद्धिं वशयतीत्युक्ते इतरेन्द्रियजयः अर्थसिद्धः । एतेन शान्त्याद्युपेतत्वंसूचितं भवति ।
अत एव आत्माभ्यासे (पं.द.७.१०६) –
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥
इत्यभियुक्तोक्तिरीत्या श्रुतार्थमननतत्कथनपरस्परप्रबोधनरूपज्ञानकाण्डोक्तव्यापारेषूपस्थितैर्वर्तमानैः, विजातीयप्रत्ययतिरस्कृत-सजातीयप्रत्ययप्रवाहरूपनिदिध्यासनानुष्ठानेन यत्यतामित्यन्वयः । एतादृशस्य पुंसः सर्वसङ्कल्पसंन्यासेन परवैराग्यापरपर्यायं योगारूढत्वं सिद्धमेव मन्तव्यम् ॥१०॥
ननु "यावज्जीवमग्निहोत्रं जुहुयात् "(पू.मी.६.२.७) "यावज्जिवं दर्शपूर्णमासाभ्यां यजेत "(आप.श्रौ.३.१४.११) "अहरहस्संध्यामुपासित "(ष.ब्रा.), "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः"(ई.उ.२)इत्यादिश्रुतिभिः यावज्जीवं कर्मणः कर्तव्यत्वेन चोदितत्वात् सर्वकर्मसंन्यासे श्रुत्युल्लङ्घनं प्रसज्येतेति चेत्, तासां श्रुतीनां अशुद्धचित्तविषयत्वात् । अत एव,"एवं त्वयि नान्यथेतोस्ति न कर्म लिप्यते नरे"(ई.उ.२) इतीशावास्यमन्त्रेण नरे नरमात्राभिमानिनि त्वयि इतः कर्मकरणात् अन्यथा अन्यो मार्गः कर्मलेपाभावप्रयोजकः नास्तीत्युक्तम् ।
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः (म.ना.उ.१०.५) संन्यासयोगाद्यतयःशुद्धसत्वाः (म.ना.उ.)॥
प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यन्ति ॥ (मुं.उ.१.२.७)

"किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे"(ऐ.उ.२.३.६)इत्यादिना कर्मसंन्यासस्यापि विहितत्वान्निन्दितत्वाच्च कर्मणः ॥ "तमेतं वेदानुवचनेनब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " (बृ.उ.४.४.२२), "योगिनःकर्म कुर्वन्ति संङ्ग त्यक्त्वाऽऽत्मशुद्धये" (भ.गी.५.११)इत्यादिश्रुतिस्मृत्यर्थपर्यालोचनया विविदिषासाधनत्वं चित्तशुद्धिद्वारा तेषामवसीयते,न तु सार्वदिकत्वं । तथासति,"यदहरेव विरजेत् तदहरेव प्रव्रजेत् " (जा.उ.४.४) इत्यादिसंन्यासविधायकवाक्यव्याकोपापत्तेः,कर्मनिन्दानुपपत्तेश्च ।"अत एवचाग्नीन्धनाद्यनपेक्षा " (ब्र.सू.३.४.२५),"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" (ब्र.सू.३.४.२६)इति च सूत्राभ्यामयमेवार्थो भण्यते । परमपुरुषार्थभूतमोक्षार्थत्वं नास्ति कर्मणां, चित्तशुद्धिद्वारा ज्ञानबहिरङ्गत्वम् इतितदिदमाह चित्तस्येति -
सर्वकर्माणि संन्यस्य कर्मकाण्डोक्तानि स्वरूपतोपि परित्यज्यभवबन्धविमुक्तये सांसारिकबन्धनिवृत्तिहेतुभूतसम्यग्दर्शननिष्ठायै, पण्डितैः आत्मविषयकपरोक्षज्ञानवद्भिः,धीरैः वशीकृतबुद्धिभिः–
पराञ्चिखानि व्यतृणत् स्वयम्भूः
तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षत्
आवृत्तचक्षुरमृतत्वमिच्छन् (क.उ.४.१)
इति श्रुतेः। धियं रातीति धीरः , प्रधानभूतां कार्यकारणसंघातमध्ये बुद्धिं वशयतीत्युक्ते इतरेन्द्रियजयः अर्थसिद्धः । एतेन शान्त्याद्युपेतत्वंसूचितं भवति ।
अत एव आत्माभ्यासे (पं.द.७.१०६) –
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।

एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥
इत्यभियुक्तोक्तिरीत्या श्रुतार्थमननतत्कथनपरस्परप्रबोधनरूपज्ञानकाण्डोक्तव्यापारेषूपस्थितैर्वर्तमानैः, विजातीयप्रत्ययतिरस्कृत-सजातीयप्रत्ययप्रवाहरूपनिदिध्यासनानुष्ठानेन यत्यतामित्यन्वयः । एतादृशस्य पुंसः सर्वसङ्कल्पसंन्यासेन परवैराग्यापरपर्यायं योगारूढत्वं सिद्धमेव मन्तव्यम् ॥१०॥

ननु "यावज्जीवमग्निहोत्रं जुहुयात् "(पू.मी.६.२.७) "यावज्जिवं दर्शपूर्णमासाभ्यां यजेत "(आप.श्रौ.३.१४.११) "अहरहस्संध्यामुपासित "(ष.ब्रा.), "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः"(ई.उ.२)इत्यादिश्रुतिभिः यावज्जीवं कर्मणः कर्तव्यत्वेन चोदितत्वात् सर्वकर्मसंन्यासे श्रुत्युल्लङ्घनं प्रसज्येतेति चेत्, तासां श्रुतीनां अशुद्धचित्तविषयत्वात् । अत एव,"एवं त्वयि नान्यथेतोस्ति न कर्म लिप्यते नरे"(ई.उ.२) इतीशावास्यमन्त्रेण नरे नरमात्राभिमानिनि त्वयि इतः कर्मकरणात् अन्यथा अन्यो मार्गः कर्मलेपाभावप्रयोजकः नास्तीत्युक्तम् ।
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः (म.ना.उ.१०.५) संन्यासयोगाद्यतयःशुद्धसत्वाः (म.ना.उ.)॥
प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यन्ति ॥ (मुं.उ.१.२.७)

"किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे"(ऐ.उ.२.३.६)इत्यादिना कर्मसंन्यासस्यापि विहितत्वान्निन्दितत्वाच्च कर्मणः ॥ "तमेतं वेदानुवचनेनब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " (बृ.उ.४.४.२२), "योगिनःकर्म कुर्वन्ति संङ्ग त्यक्त्वाऽऽत्मशुद्धये" (भ.गी.५.११)इत्यादिश्रुतिस्मृत्यर्थपर्यालोचनया विविदिषासाधनत्वं चित्तशुद्धिद्वारा तेषामवसीयते,न तु सार्वदिकत्वं । तथासति,"यदहरेव विरजेत् तदहरेव प्रव्रजेत् " (जा.उ.४.४) इत्यादिसंन्यासविधायकवाक्यव्याकोपापत्तेः,कर्मनिन्दानुपपत्तेश्च ।"अत एवचाग्नीन्धनाद्यनपेक्षा " (ब्र.सू.३.४.२५),"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" (ब्र.सू.३.४.२६)इति च सूत्राभ्यामयमेवार्थो भण्यते । परमपुरुषार्थभूतमोक्षार्थत्वं नास्ति कर्मणां, चित्तशुद्धिद्वारा ज्ञानबहिरङ्गत्वम् इतितदिदमाह चित्तस्येति -

चित्तस्य शुद्धये कर्म नतु वस्तूपलब्धये ।
वस्तुसिद्धिर्विचारेण न किंचित्कर्मकोटिभिः ॥११॥

अन्वयः

कर्म चित्तस्य शुद्धये न तु वस्तूपलब्धये वस्तुसिद्धिः विचारेण किंचित् कर्मकोटिभिः न ||११||

स्पष्टोर्थः ।

विचारस्य वस्तूपलब्धिहेतुत्वं दृष्टान्तेन विशदयति सम्यगिति –

सम्यग्विचारतः सिद्धा रज्जुतत्वावधारणा ।
भ्रान्त्योदितमहासर्पभवदुःखविनाशिनी ॥१२॥
अन्वयः

रज्जुतत्त्वावधारणा सम्यग्विचारतः सिद्धा भ्रान्त्या उदित महासर्पभयदुःखविनाशिनी॥ १२॥
भाष्यम् –

मन्दान्धकारे पतितां रज्जुं सर्पं मन्वानः पुरुषः बिभ्यत् दीपानयनेन सम्यग्विचार्य वस्तुतत्त्वं बुध्वा भयकम्पादिदुःखं जहातीति प्रसिद्धम् । तत्र रज्वां भ्रान्त्या उदितः यो महासर्पः, तद्भवं तत्प्रत्ययजन्यं यद्दुःखं, तद्विनाशिनी सम्यग्विचारजन्या रज्जुतत्त्वावधृतिः। तद्वत् भ्रान्त्या जातं यद्भवदुःखं जन्ममरणप्रयोज्यदुःखं, तद्विनाशिनी सम्यग्विचारप्रयोज्या तत्त्वावधारणा आत्मयाथात्म्यावधृतिः ब्रह्मसाक्षात्कारः इति सर्वांशे प्रकृतोपयोग्ययं दृष्टान्तः ॥१२॥

आप्तोक्त्यनुसारेण क्रियमाणविचारस्यैव अर्थनिश्चयहेतुत्वम्, नान्यस्य कर्मण इत्याह –
अर्थस्येति ।

अर्थस्य निश्चयो दृष्टो विचारेण हितोक्तितः ।

न स्नानेन न दानेन प्राणायामशतेन वा ॥१३॥
अन्वयः

हितोक्तितः विचारेण अर्थस्य निश्चयः दृष्टः (भवति) स्नानेन न (भवति) दानेन प्राणायमशतेन वा न (भवति)॥ १३॥
भाष्यम् –
अज्ञानदोषवशात् स्वयंभ्रान्तस्य पुरुषस्य आप्तोक्तिरूपावलम्बनाभावे भयकम्पाद्यनर्थमनुभवतस्स्वतो विचारे प्रवृत्तेः दुर्लभत्वात् विचारे हितोक्तिर्हेतूकृता । हितत्वं च यथार्थवक्तृत्वम । यदि भ्रान्तः पुरुषः हितोक्त्यनुसारेण विचारमविधाय स्नानं वा दानं वा प्राणायामशतं वा कर्म कुर्यात् भ्रमनिवर्तकापरोक्षप्रमाया अभावे अनर्थप्रयोजकभ्रमानिवृत्तेः कथं निवृत्तानर्थो भवेदिति भावः । विचारश्च अर्थयाथात्म्यनिश्चयानुकूलो मानसो व्यापारः । तथा च हितोक्तिसहकृतविचारस्यैवार्थप्रमाहेतुत्वं भ्रमस्थले प्रत्यक्षसिद्धम् । तथा सति प्रकृतेऽपि श्रुत्याचार्योपदेशानुसारेण आत्मविचारं कृत्वा तद्याथात्म्यमपरोक्षीकृत्य अनात्माध्यासरूपसंसारादात्मानं मोचयेद् इत्युपदेशः ॥१३॥
तत्तत्कर्मणि समर्थस्यैव तत्तत्कर्मफलभोक्तृत्वसम्भवात् असमर्थस्य तदयोगात् बाह्यदेशकालादेः सहकारित्वमात्रम् आन्तरसामर्थ्यस्यैव फलदायकत्वमित्याह - अधिकारिणमिति ।

अधिकारिणमाशास्ते फलसिद्धिर्विशेषतः ।
उपाया देशकालाद्याः सन्त्यस्यां सहकारिणः ॥१४॥

अन्वयः
आशास्ते अस्याम् देशकालाद्याः फलसिद्धिःविशेषतः अधिकारिणम् उपायाः सहकारिणः सन्ति॥ १४॥
भाष्यम् –
कर्मणां तावद्दृष्टार्थवात्, "यदाहवनीये जुहोति" (तै.ब्रा.१.१.१०), "अश्वस्य पदे जुहोति"(तै.ब्रा.३.८.९), "प्राचीनप्रवणे वैश्वदेवेन यजेत" (तै.ब्रा.१.४.१०), "सायं जुहोति" (मै.सं.१.८.७), "प्रातर्जुहोति" (तै.ब्रा.२.१.३), "वसन्ते वसन्ते ज्योतिषा यजेत" (आप.श्रौ.सू.१०.२.५), "वसन्ते ब्रह्मणोऽग्नीनादधीत" (तै.सं.२.२.३.२) इत्यादि शास्त्रानुसारेण देशकालयोरपि असाधारण-कारणत्वम् अङ्गीकर्तव्यम् ।

यद्यपि ज्ञानस्यापि,
यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके ।
यथाऽप्सु परीव ददृशे तथा गंधर्वलोके छायातपयोरिव ब्रह्मलोके ।। (क.उ.६.५)
इह चेदवेदीदथ सत्यमस्ति
न चेदिहावेदीन्महती विनष्टिः । (के.उ.२.५)

इत्यादि श्रुत्यनुसारेण मनुष्यलोकब्रह्मलोकयोरेव ज्ञानभूमित्वं प्रतीयते, एवं
ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत् ।
अनापकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥ (जा.स्मृ.)
"ब्रह्मचर्य समाप्य गृही भवेत् ,गृहाद्वनी भूत्वा प्रव्रजेत् "(जा.उ.४) इत्यादि प्रमाणानुसारेण ब्रह्मज्ञनान्तरङ्गभूतसंन्यासस्यापि कालो विधीयत इव प्रतिभाति । अथापि अशुद्धचित्तो राक्षसराजो विरोचनः ब्रह्मलोकं गतोऽपि परमगुरुणा परमेष्ठिना उपदिष्टोऽपि नैवाग्रहीदात्मानम् ।
संसारमेव निस्सारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ।। इति
"यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् " (जा.उ.४.४) इत्यादिप्रमाणैः वक्ष्यमाण-वैराग्यादिसाधनचतुष्टयसंपन्नस्य देशकालौ न विवक्षितौ इत्यभिप्रायेण तयोस्सहकारित्वमुक्तम् । अत एव, " विद्वान् संन्यस्तबाह्यार्थसुखस्पृहस्सन् " (श्लो.८) इति विवेकवैराग्ये ब्रह्मात्मनाऽवस्थानलक्षणमोक्षसाक्षाद्धेतुभूतसम्यग्दर्शननिष्ठार्थं मोक्षसाधनोपदेशकगुरूपसदनपुरस्सरतदुपदिष्टार्थमनस्समाधाने हेतूकृते । एतादृशमनस्समाधानस्य शमदमोपरतितितिक्षा-श्रद्धानामभावे असम्भवात् मुक्तीच्छाभावे तदर्थं प्रयत्नासम्भवाच्च, "अतो विमुक्त्यै" (श्लो.८) इत्याद्यशलोके विवेकवैराग्य –शमादिषट्कमुमुक्षुत्वानां जिज्ञासा साधारणहेतूनां सूचनं कृतमेव । तथा च "तरति शोकमात्वमित्" (छा.उ.७.१.३), "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" (मुं.उ.१.२.१२) इत्यादिश्रुत्यनुसारेण शोकशब्दितबन्धनाशकं सम्यज्ज्ञानं सद्गुरूपदिष्टार्थविचारमन्तरा न केनापि साधनान्तरेणेति । श्लोके अस्यामित्यस्य सिद्धावित्यर्थः ॥१४॥

अतो विचार: कर्तव्य: जिज्ञासोरात्मवस्तुन:
समासाद्य दयासिंधुं गुरुं ब्रह्मविदुत्तमम् ॥१५॥
अन्वयः

अतः दयासिन्धुं ब्रह्मविदुत्तमम् गुरुं समासाद्य जिज्ञासोः आत्मवस्तुनःविचारः कर्तव्यः||१५||
भाष्यम् –
अतः सर्वानर्थनिवर्तकनिर्णयहेतुत्वात् जिज्ञासोः आत्मानं सम्यज्ज्ञातुमिच्छोः पुरुषस्य आत्मवस्तुनः विचारः कर्तव्यः । तत्र इति कर्तव्यतामाह - दयासिंधुं स्वयं कृतार्थत्वेन स्वस्य प्रयोजनाभावः सिद्ध एव, इतरेऽपि मा दुःखमनुभूवन्निति करूणायाःसमुद्रम् । आधारमित्यर्थः । जलराशिरिव जलानाम । गुरुम् –
गुशब्दस्त्वन्धकारस्याद् रुशब्दस्तन्निरोधकः।
अन्धकारनिरोधित्वाद् गुरुरित्यभिधीयते ॥

इति गुरुगीतोक्तरीत्या स्वोपदेशेन अज्ञानाख्यहार्दान्धकारहारकम् इत्यर्थः । यथान्धकारः प्रपञ्चमावृत्य तज्ज्ञानप्रतिबन्धको भवति एवमज्ञानमात्मानमावृत्य तत्स्पष्टभानप्रतिबन्धकं भवतीत्यन्धकारत्वमज्ञानस्य । अत एव तम इत्यादिशब्दैरभिलापः श्रुतौ "तमोह्यासीत् तमसा गूल्हमग्रे " (ऋ.८.७.१७) इत्यादौ । एतद्विशेषणद्वयं यत्र सम्भवति तमाह - ब्रह्मविदुत्तममिति । ब्रह्म विदन्तीति ब्रह्मविदः तेषामुत्तमं स्थितप्रज्ञमित्यर्थः ।अत्र श्रुतयः पूर्वमुदाहृताः।
तत्समासादनं च –
तमाराध्य गुरुं भक्त्या प्रह्वः प्रश्रयसेवनैः । (श्लो.३६) इति, वक्ष्यमाणरीत्या –
"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया"। (४.३४)
इति गीतोक्तरीत्या च तस्य स्वात्माभिमुखीकरणमिति । अतो विमुक्त्यै इत्यष्टमश्लोकस्य इयद्भिः श्लोकैः विवृतिः कृता ॥१५॥

मेधावी पुरुषो विद्वान् ऊहापोहविचक्षणः ।
अधिकार्यात्मविद्यायामुक्तलक्षणलक्षितः ॥१६॥

अन्वयः
उहापोहविचक्षणः विद्वान् मेधावी पुरुषः उक्तलक्षणलक्षितः आत्मविद्यायाम् अधिकारी॥ १६॥
भाष्यम् –
अधिकारिणमाशास्ते फलसिद्धिर्विशेषतः (श्लो.१४)
इत्युक्तमधिकारिणं प्रकृते कथयति मेधावीत्यादिना –
"धीर्धारणावती मेधा" (अ.को. १.५.२) इति कोशात् श्रुतार्थ धारणक्षमबुद्धिमानुच्यते मेधाऽस्यास्तीति व्युत्पत्या मेधावीशब्देन विद्वानिति अधीतकाव्यकोशव्याकरणः उच्यते । ऊहापोहविचक्षणः एतेन तर्कमीमांसासंस्कृतबुद्धित्वं गम्यते । पदवाक्यप्रमाणज्ञ इति यावत् उक्तलक्षणलक्षित इति अष्टमश्लोकादारभ्य पञ्चदशश्लोकमध्यपातिश्लोकैः समासव्यासाभ्यां सूचितविवेकवैराग्य-शमादिषट्कमुमुक्षुत्वरूपसाधनचतुष्टयसम्पन्न इत्यर्थः । आत्मविद्यायाम अधिकारी आत्मविद्याफलं मोक्षमनुभवितुमर्हतीत्यर्थः ॥१६॥

उक्तानि लक्षणानि स्फुटप्रतिपत्तये क्रोडीकृत्याह विवेकिन इति । यद्वा - उक्तं लक्षणं जिज्ञासुत्वम् ।
"अतोविचारः कर्तव्यो जिज्ञासोरात्मवस्तुनः" (श्लो.१५) इत्यत्र जिज्ञासुरेव मेधावित्वादिविशेषणविशिष्टः आत्मविद्याफलभाक् । इदानीं जिज्ञासायां कस्याधिकार इति चेत्, पूर्वमष्टमश्लोके विद्वान्संयस्तबाह्यार्थसुखस्पृहस्सन्, उपदिष्टार्थसमाहितात्मा इति, दशमश्लोके धीरैरिति शब्दसूचितस्य साधनचतुष्टयसम्पत्तिविशिष्टसयेत्याह विवेकिन इति -

विवेकिनो विरक्तस्य शमादिगुणशालिनः ।
मुमुक्षोरेव हि ब्रह्मजिज्ञासायोग्यता मता ॥१७ ॥

अन्वयः
ब्रह्मजिज्ञासायोग्यता मता विवेकिनः विरक्तस्य शमादिगुणशालिनःमुमुक्षोःएव हि॥ १७॥

भाष्यम् –
विवेकादिस्वरूपं स्पष्टयिष्यते मूल एवोपरिष्टात् (श्लो.१९) ज्ञातुमिच्छा जिज्ञासा, ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा तत्रावगति पर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म ।अखण्डकारवृत्तिप्रतिफलितं चैतन्यं जिज्ञासापदलक्ष्यमाणविचारस्य फलम् । सामान्यतो ब्रह्मज्ञानस्य विचारात्पूर्वमपि सत्त्वात् एतादृशमिष्टं संपादनीयं चेत् –
दद्यान्नावसरं किंचित् कामादीनां मनागपि ।
आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया ॥

इत्युक्तरीत्या सार्वदिकवेदान्तविचार आवश्यकः।
देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥
इत्युक्तज्ञानं जनयितुं स एव समर्थः ॥१७॥

एतादृशविचारजननी या इच्छा तत्र योग्यता विवेकादिसाधनयुतस्यैव नान्यस्येत्येवकारबोधितमर्थमन्वयेन व्यतिरेकेण च स्पष्टयति - साधनानीति ।

साधनान्यत्र चत्वारि कथितानि मनीषीभिः ।
येषु सत्स्वेव सन्निष्ठा यदभावे न सिद्ध्यति ॥१८ ॥
अन्वयः
अत्र मनीषिभिः चत्वारि साधनानि कथितानि येषु सत्सु एव सन्निष्ठा(सिध्यति) यद अभावे न सिध्यति॥ १८॥

भाष्यम् –
लोके यस्य तावत् कार्यत्वेनाभिमतसमानाधिकरणात्यन्ताभावप्रतियोगित्वं स्वसमानाधिकरणात्यन्ताभावप्रतियोगि-कार्यत्वाभिमतकत्वं वा तस्य तत्कारणत्वं न संभवति । यथा पटसमानाधिकरणात्यन्ताभावप्रतियोगिनी मृत्, मृत्समानाधिकरणात्यान्ताभाव प्रतियोगिपटवती वा सा पटकारणत्वं नाश्नुते । अपि तु मृत्सत्वे घटसत्वं मृदभावे घटाभाव इत्यन्वयव्यतिरेकसहचारग्रहवशात् घटकारणत्वं भजते ।एवं विवेकादिचतुष्टयसत्त्व एव सति ब्रह्मणि नितरां स्थितिप्रयोजक ब्रह्मजिज्ञासायाः सम्भवात् तदभावे चासम्भवात् अन्वयव्यतिरेकसहचारग्रहाधीना तेषां विवेकादीनां सन्निष्ठापरपर्यायफलपर्यन्त-ब्रह्मजिज्ञासाकारणत्वावगतिः इत्युक्तम् । मनीषिभिः कथितानीति । तत्र मनीषित्वं च श्रुतितात्पर्यज्ञानवत्त्वम् । श्रुत्यवलम्बनाभावे एतादृशाधिकारिविशेषणानां दुर्ज्ञानत्वात् । तादृशाश्च मनीषिणः बादरायणप्रभृतयः। ते किल "अथातो ब्रह्मजिज्ञासा" (ब्र.सू.१.१.१) इति सूत्रघटकाथशब्देन साधनचतुष्टयसम्पत्त्यानन्तर्यं सूत्रयन्तः ब्रह्मजिज्ञासाधिकारिणमेवं विधं सूत्रयामासुः इति शारीरकमीमांसाद्याधिकरणतृतीयवर्णकभाष्याद अर्थतोऽवगम्यते। एतादृशविशेषणलम्भकश्रुतयस्तु 'यत्कृतकं तदनित्यम्' इति न्यायवती "तद्यथेहकर्मचितो लोकःक्षीयते एवमेवामुत्र पुण्यचितो लोकःक्षीयते" (छां.उ.८.१.६), "यो वै भूमा तदमृतम्, अतोऽन्यदार्तम्" (छां.उ.७.२४.१), "न जायते म्रियते वा विपश्चित् " (क.उ.२.१८) इत्यादिश्रुतिः आत्मनः नित्यत्वम्, अनात्मनः अनित्यत्वं च बोधयतीति विवेकलम्भिका । "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" (मु.उ.१.२.१२), "न वा अरे पत्युः कामाय (बृ.उ.२.४.५) इत्यारभ्य, "आत्मनस्तु कामाय सर्वप्रियं भवति" (बृ.उ.) इत्यन्ता श्रुतिः अनात्ममात्रे वैराग्यप्रतिपादिका । "शान्तो दान्त उपरतस्तितिक्षुः समाहितःश्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत् "(बृ.उ.४.४.२३) इति श्रुतिः शमादिषट्कं बोधयति। "न स पुनरावर्तते" (छां.उ.८.१५.१) इति श्रुतिः मोक्षस्य नित्यत्वं वदन्ती तत्रेच्छामादधाति। उपनिषदामर्थवादत्वं वदतां कर्ममीमांसकानां मते एतासां स्वार्थे तात्पर्यं नास्तीत्येव ज्ञानसम्भवात् "ब्रह्मजिज्ञासितव्यं", तत्र च एतादृशविशेषण विशिष्टोऽधिकारीति ज्ञानस्य दुर्लभत्वात् मनीषिभिः कथितानीत्युक्तम् । तथा च प्रमाणान्तरानधिगत-कालत्रयाबाध्यपरमपुरुषार्थस्वरूप ब्रह्मप्रतिपादकत्वादुपनिषदां तात्त्विकप्रामाण्यस्यात्रैव सम्भवात् तत्तद्वाक्यसमर्पित-विवेकादिविशिष्टस्यैव "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" (छां.उ.८.७.१) इत्यादिवाक्यविहितजिज्ञासायोग्यतेति सर्वं चतुरस्रम् ॥१८॥

तत्र विवेकिनो विरक्तस्ये (श्लो.१७)त्यादिना कथितं विवेकादिकं क्रमतो निर्दिशति आदावित्यादिना –

आदौ नित्यानित्यवस्तुविवेकः परिगण्यते ।
इहामुत्रफलभोगविरागस्तदनन्तरम् ॥१९॥
शमादिषट्कसंपत्तिः मुमुक्षुत्वमिति स्फुटम् ।

अन्वयः

आदौ नित्यानित्यवस्तुविवेकःतदनन्तरं इहामुत्रफलभोगविरागःशमादिषट्कसम्पत्तिःमुमुक्षुत्वं इति स्फुटम् परिगण्यते ||१९॥
भाष्यम् –
विवेकादीनां मध्ये पूर्वपूर्वस्य उत्तरोत्तरहेतुत्वात् क्रमः समाश्रितः। इदं नित्यं इदमनित्यमिति जनानः किल अनित्याद्विरज्येत । अतः नित्यानित्यवस्तुविवेकाभावे वैराग्यं दुस्सम्पादम् इति विवेकस्य वैराग्यहेतुत्वम् । वैराग्यवत एव पुरुषस्य अन्तर्बहिरिन्द्रिय-निरोधरूपशान्तिदान्ती । तत्रापि निरुद्धान्तःकरणस्यैव बहिरिन्द्रियनिरोधरूपदमः मनस्सम्बन्धाभावे इतरेषामिन्द्रियाणामकिञ्चित्करत्वात् । तर्हि शमे सति दमस्य स्वतस्सिद्धत्वात् किमिति तस्य साधनकोटिप्रविष्टत्वमिति चेत् , "इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः"| (२.६०)
इति गीतोक्तरीत्या बाह्येन्द्रियनिरोधाभावे शमस्य दृढत्वाभावात्। जितेन्द्रियस्यैव उपरमशब्दितसंन्यासः, तस्यैव शीतोष्णादि-द्वन्द्वसहिष्णुत्वरूपा तितिक्षा, तस्यैव बाह्यविक्षेपाभावात् ब्रह्मण्यैदम्पर्येणावस्थानलक्षणं समाधानम्, एतादृशगुणविशिष्टस्यैव ब्रह्मैकमस्ति जगन्मिथ्ये इत्युपदिश्यमानगुरुवेदान्तवाक्य विश्वासरूपश्रद्धा इति । शमादिषट्कमध्येऽपि पूर्वापरीभावे कारणं सुवचम्। एतादृशः किल

पुरुषधौरेयः मोक्षादन्यन्न कामयते, तत्र विलम्बं च न सहत इति तीव्रमुमुक्षावान् भवितुमर्हति इत्यभिप्रायेण आदौ नित्यानित्येत्याद्याह। तदनन्तरं इहामुत्रफलभोगविराग इति च । तेन विवेकानन्तर्यस्य वैराग्ये कथनेन 'तदुदितः स हि यो यदनन्तरः' इति न्यानेन विवेककार्यत्वं वैराग्ये उक्तप्रायम् । तदनन्तरमिति उत्तरत्राप्यनुषज्यते वैराग्यानन्तरं शमादिसंपत्तिः, तदनन्तरं मुमुक्षुत्वमिति ॥१९॥
उक्तसाधनानि विवृणोति - ब्रह्मेत्यादिना ।

ब्रह्म सत्यं जगन्मिथ्येत्येवं रूपो विनिश्चयः ॥२०॥
सोयं नित्यानित्यवस्तुविवेकः समुदाहृतः ॥२०१/२॥

अन्वयः
ब्रह्म सत्यं जगत् मिथ्या इति एवं रूपः विनिश्चयः सः अयं नित्यानित्यवस्तुविवेकः समुदाहृतः॥ २०॥
भाष्यम् –

ब्रह्म नित्यं जगदनित्यमिति निश्चयसत्वेऽपि दृढं वैराग्यं न सम्भवति, अनित्यसुखस्यापि प्रायः काम्यमानत्वात् । जगन्मिथ्येत्युक्ते मिथ्याभूतार्थः केनापि न काम्यते । न हि स्वाप्निकं राज्यं कामयन्ते राज्यकामयितारः। अतः वैराग्यस्य नियतमुत्पत्तये ब्रह्म नित्यं जगदनित्यमित्यनुक्त्वा ब्रह्म सत्यं जगन्मिथ्येत्याह ।विनिश्चय इति विशेषेण निश्चय इत्यर्थकेन निश्चयेऽप्रामाण्यज्ञानानास्कन्दितत्वमुक्तं भवति । सोयमिति, सः विवेकिन इत्यत्र विवेकिविशेषणत्वेनोक्तः, अयम् आदौ नित्यानित्यवस्तुविवेक इत्युक्तः इत्यर्थः ।
अस्यैव ऐहिकामुष्मिकफलभोगविरागहेतुत्वं नियतमिति समुदाहृत इत्यत्र समित्युपसर्गेण द्योतितम् ॥२०१/२ ॥

विवेकं निरूप्य वैराग्यं निरूपयति तद्वैराज्यमिति –

तद्वैराग्यं जुगुप्सा या दर्शनश्रवणादिभिः ॥२१॥
देहादिब्रह्मपर्यन्ते ह्यनित्ये भोग्यवस्तुनि ॥२११/२॥

अन्वयः
दर्शनश्रवणादिभिः देहादिब्रह्मपर्यन्ते हि अनित्ये भोगवस्तुनि या जिगुप्सा(जिहासा) तद्वैराग्यं ॥ २१॥
भाष्यम् –
ऐहिकदेहादिभोग्यवस्तुनः दर्शनेन, आमुष्मिकदिव्यदेहादि भोग्यवस्तुनः श्रवणेन, आदिपदेन दृष्टजातीयस्य श्रुतजातीयस्य अनुमानेन । अनुभूयमानशरीरप्रभृतिब्राह्ममानेन शतवर्षजीविचतुर्दशभुवनाधिपत्यावच्छेदकहिरण्यगर्भशरीरपर्यन्तं सर्वस्मिन् भोग्यस्तुनि अनित्ये मिथ्याभूते या जुगुप्सा, कदापीदृशपदार्थसम्बन्धो माभूदिति, काकविष्ठायामिवासह्यबुद्धिः तद्वैराग्यम् । 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' (र.व.) इतिवद विधेयप्राधान्यात् नपुंसकनिर्देशः तदिति।
स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
वैराग्यकारणं तस्य किमन्यदुपदिश्यताम् (नि.पु.)
सततं प्रवाह्यमानैः वृषभैःअश्वैः खरैर्गजैः महिषैः ।
हा कष्टं क्षुत्क्षामैः श्रान्तैर्नो शक्यते वक्तुम् ॥ (स.वे.सि.सा.सं)

"तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" (छां.उ.८.१.६), "भूम्नोन्यदार्तम्" (बृ.उ.३.४.२, छां.उ.७.२४), " क्षीणे पुण्ये मर्त्यलोकं विशन्ति" (भ.गी.९.२१), "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोर्जुन" (भ.गी.८.२६) सूतसंहितायां यज्ञवैभवखण्डे सप्तदशोऽध्यायः, सर्ववेदान्तसिद्धान्तसारसङ्ग्रहस्थाः 'कुक्षौ स्वमातुर्मलमूत्रमध्ये ' (श्लो.२७) इत्यादिना
पुण्यक्षये पुण्यकृतो नभस्थैः
निपात्यमानान् शिथिलीकृताङ्गन् ।
नक्षत्ररूपेण दिवश्चयुतांस्तान्
विचार्य को वा विरतिं न याति ॥
यत्रास्ति लोके गतितारतम्यं

इत्यन्ताश्च (श्लो.३९) श्लोकाः वैराग्यविषयेऽनुसंधेयाः । मानुषदेहादेः रोगाद्युपप्लुतत्वं, पश्वादीनामत्यन्तपारतन्त्र्यं मूकत्वादि, देवानां राक्षसादिपीडितत्वं, शब्दादीनां विषयाणां बहुविधानर्थप्रदत्वं कुरङ्गादिदृष्टान्तैः अनुसन्दधानस्य सर्वत्रानात्मसु जुगुप्सा सुलभेति भावः। एतच्च 'शब्दादिभिः पञ्चभिरेवे' (श्लो.७८) इत्यादिना स्वयमुत्तरत्र स्पष्टयिष्यते । यद्यपि "अपाम सोमममृता अभूम" (ऋ.६.४.११) "अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति " (श.ब्रा.२.६.३.१) इति श्रुत्यवलोकनेन कर्मफलस्यापि नित्यत्वं प्रतीयते। अथापि 'यत्कृतकं तदनित्यम्' इति न्यायसहकृत- तद्यथेह कर्मचित (छां.उ.८.१.६) इत्यादिश्रुत्यनुसारेण अमृताक्षय्यपदयोः सङ्कुचितार्थकत्वस्यावश्यं वक्तव्यत्वात् न दोषः । उक्तं

